# वाग्विलासिनी

## व्याकरणविभागीया शोधपत्रिका

प्रधानसम्पादकः
आचार्यः प्रकाशपाण्डेयः

सम्पादकः
**प्रो. सुबोधशर्मा**




प्रकाशकः
**राष्ट्रियसंस्कृतसंस्थानम्**
( भारतशासनाधीनो मानितविश्वविद्यालयः )
भोपालपरिसरः
संस्कृतमार्गः बागसेवनिया, भोपालम्

मार्च २०१९

अङ्कः - चतुर्थः

# वाग्विलासिनी

( व्याकरणविभागीया शोधपत्रिका )

२०१९

संरक्षकः
प्रो. परमेश्वरनारायणशास्त्री
कुलपतिः
राष्ट्रियसंस्कृतसंस्थानम्
नवदेहली

प्रधानसम्पादकः
प्रकाशपाण्डेयः
प्राचार्यः
राष्ट्रियसंस्कृतसंस्थानम्
भोपालपरिसरः, भोपालम्

सम्पादकः
प्रो. सुबोधशर्मा

सहसम्पादकः
डॉ. नरेशकुमारपाण्डेयः



राष्ट्रियसंस्कृतसंस्थानम्
( मानितविश्वविद्यालयः )
Accredited with 'A' Grade by NAAC
भोपालपरिसरः, संस्कृतमार्गः, बागसेवनिया
भोपालम् ( म.प्र. ) ४६२०४३

**प्रकाशकः**

व्याकरणविभागः
राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालयः)
भोपालपरिसरः, संस्कृतमार्गः, बागसेवनिया
भोपालम्, (म. प्र.) – ४६२०४३
website - www.rsksbhopal.ac.in

**ISSN -**

**अङ्कः** – चतुर्थः (२०१९)

**मूल्यम्** – २००/– रुप्यकाणि

अक्षरसंयोजनं तकनीकीसहयोगश्च – रोहित पचौरी

**मुद्रकः** – **S.M. Systems**,
154, Mahendra Complex,
M.P. Nagar, Zone -I, Bhopal

**प्राप्तिस्थलम्** –

राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालयः)
भोपालपरिसरः, संस्कृतमार्गः, बागसेवनिया,
भोपालम्, (म. प्र.) – ४६२०४३
दूरभाषसंख्या – ०७५५–२४१८०४३, फैक्ससंख्या – ०७५५–२४१८००३

**प्रकाशपाण्डेयः**
प्राचार्यः
राष्ट्रियसंस्कृतसंस्थानम्
( मानितविश्वविद्यालयः )
(मानवसंसाधनविकासमन्त्रालय-भारतशासनाधीनम्)
भोपालपरिसरः, संस्कृतमार्गः, बागसेवनिया,
भोपालम् - 462043 (म.प्र.)



**Prakash Pandey**
**Principal**
**Rashtriya Sanskrit Sansthan**
**(Deemed University)**
(Under Ministry of H.R.D., Govt. of India)
Bhopal Campus, Sanskrit Marg,
Bagsevaniya, Bhopal - 462043 (M.P.)

# शुभाशंसा

पुरुषार्थेषु धर्मस्य प्राधान्यं भवति। धर्मेणैव मनुष्यः लौकिकं पारलौकिकञ्च सर्वविधमभ्युदयं विन्दन्ते। तदुक्तं कणादेन- यतो अभ्युदयनिःश्रेयससिद्धिः स धर्मः। (वैशेषिकसूत्र, 1.1.2) धर्मेणैव जीवः परमं पुरुषार्थं मोक्षं प्राप्तुमर्हति। अत एव च धर्म एव मानवमन्येभ्यो जीवेभ्यः पृथक्करोति। एतादृशस्य धर्मस्य च मूलं भवति वेदः। तदुक्तम्- 'वेदोऽखिलो धर्ममूलम्' इति। तदेतस्य वेदस्य षडङ्गानि भवन्ति। तदुक्तं महाभाष्ये-'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयः ज्ञेयश्च इति। प्रधानम् च षट्सु अङ्गेषु व्याकरणम्। प्रधाने च कृतः यत्नः फलवान् भवति'।

तत्र मुखस्थानापन्नं प्रधानवेदाङ्गभूतं व्याकरणं संवर्धयितुं भोपालपरिसरस्य व्याकरणविभाग प्रतिवर्षमिव ऐषमेऽपि वर्षे व्याकरणशास्त्रीयराष्ट्रियशोधसङ्गोष्ठीमाचरितवान्। यत्र देशस्य विभिन्नभागेभ्य आगताः विद्वांसः स्व-स्वशोधपत्राणि प्रस्तुतवन्तः। इदानीं व्याकरणविभागः वाग्विलासिनी-नामधेयायाः व्याकरणविभागीयपत्रिकायाःचतुर्थाङ्कं प्रकाशयतीति महान् हर्षः समजायत।

इयं हि व्याकरणविभागीया पत्रिका समासवृत्त्यर्थविशेषाङ्करूपेण प्रकाश्यत इतीतोऽपि मोमुद्यते मनः,यतोहि समासवृत्त्यर्थविषये विद्वत्सु महती चर्चा विद्यते। एषोऽङ्कः नूनमेव छात्राणामन्येषाञ्च जिज्ञासूनां कृते महते उपकाराय स्यादिति दृढं विश्वसिमि। पत्रिकाप्रकाशनकर्मणि भोपालपरिसरीयव्याकरणविभागीयान् कृतभूरिपरिश्रमान् विदुषः धन्यवादेन सभाजयन् शुभं कामये।।

प्रकाशपाण्डेयः
प्राचार्यः

।।श्रीः।।

# सम्पादकीयम्

धर्मार्थकाममोक्षाख्येषु चतुर्षु पुरुषार्थेषु मोक्षस्यैव परमोपादेयत्वं स्वीक्रियते विद्वद्भिः। मोक्षप्राप्त्युपायेषु च वेदो मुख्यं स्थानं भजते। तदुक्तम्-

**प्राप्त्युपायोऽनुकारश्च तस्य वेदो महर्षिभिः।** (वा.प.1.5)

स च वेदः षडङ्गो भवति। तदुक्तं- षडङ्गो वेदोऽध्येयो ज्ञेयश्च'। तानि च षडङ्गानि -

**छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।**

**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।।**

**शिक्षाघ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।** (प.शि.41,42) इति।

तत्र 'प्रधानञ्च षट्स्वङ्गेषु व्याकरणम्'' इति भाष्यात्,

**आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः।**

**प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधाः।** (वा.प.1.11)

वाक्यपदीयाच्चनूनवेदाङ्गेषु व्याकरणमभ्यर्हितं भवति। तदेतस्य व्याकरणस्याध्यात्मिकं लौकिकञ्चेत्युभयविधं महत्त्वम् भवतीति नाविदितं विदुषाम्। अत एवात्र दार्शनिकपक्षः प्रक्रियापक्षश्चेत्युभयपक्षपोषितमिदं शास्त्रम्। तदुक्तम्- 'सर्ववेदपारिषदं हीदं शास्त्रं तत्र नैकः पन्थाः शक्य आस्थातुम्'(म.भा.2.1.58) तत्रापि प्रक्रियापक्षस्य दार्शनिकपक्षापेक्षयाधिकं महत्त्वं वर्तते, यतः अयं प्रक्रियापक्षः दार्शनिकपक्षस्यापि उपायभूतो विद्यते। तथा चाह श्रीभर्तृहरिः-

**उपायाः शिक्षमाणानां बालानामुपलालना।**

**असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते।।** (वा.प. 2.238)

व्याकरणप्रक्रियायाञ्च समासवृत्त्यर्थज्ञानमतीवोपयोगि भवति। यतोहि बहुविधेषु प्रयोजनेषु व्याकरणशास्त्रस्य लाघवं परं प्रयोजनं भवति, लघ्वर्थं चाध्येयं व्याकरणमिति भाष्यात्। लघ्वर्थञ्च समास्य महती आवश्यकता वर्तते।

वादे वादे जायते तत्त्वबोधः इति वचनान्नूनं पौनःपुन्येन शास्त्रमीमांसाकरणेन शास्त्राणां तत्त्वज्ञानं जयते। एतदर्थं कुलपतीनाम् आचार्यपरमेश्वरशास्त्रिवर्याणामाषिशा प्राचार्यप्रवर-श्रीप्रकाशपाण्डेयमहोदयानां सत्प्रयासेन च राष्ट्रियसंस्कृतसंस्थानभोपालपरिसरीय-

व्याकरणविभागेनवर्षेऽस्मिन्- (2019) 'समासवृत्त्यर्थविमर्शः' इति विषयमाश्रित्य द्विदिवसीयराष्ट्रियगोष्ठी समायोजिता। यत्र गोष्ठ्यां पञ्चाशत्तोऽधिका विद्वांसः छात्राश्च स्व-स्वविचारान् प्राकटितवन्तः। तेषु केषाञ्चन विदुषां यद्व्याख्यानं विशेषतः तत्संग्रहात्मिकाया **वाग्विलासिनी**नामधेयायाः व्याकरणविभागीयपत्रिकायाः चतुर्थोऽङ्कः समासवृत्त्यर्थविमर्श-विशेषाङ्कात्मकोऽधुना प्रकाश्यमेतीति महान्तं हर्षमनुभवामि। नूनमनेनाङ्केन समासतत्त्वजिज्ञासूनां जनानां कृते समासतत्त्वावबोधाय महल्लाभकरः स्यादिति मे विश्वसः। सर्वेषां व्याकरणविभागीयप्राध्यापकानां महत्प्रयासेन पत्रिकेयं पूर्णतामगादिति सर्वेभ्यस्तेभ्यः धन्यवादाः शुभकामनाश्च।

प्रो.सुबोधशर्मा
व्याकरणविभागाध्यक्षः

# विषयसूची

# समासे सामर्थ्यविमर्शः

प्रो. आजादमिश्रो 'मधुकरः'

पदयोः पदानां वा समसनम् एकीभवनं समासः कथ्यते। समासश्च वृत्तिष्वन्यतमः। वृत्तयः पञ्च भवन्ति। ताश्च कृत्तद्धितसमाससनाद्यन्तधात्वेकशेषरूपाः।[१] वृत्तिरेव पदविधिशब्देनाभिधीयते। पदविधिश्च समर्थो भवति। तथा चाह भगवान् पाणिनिः–समर्थः पदविधिः[२] इति। पदस्य विधिः पदविधिः पदमुद्दिश्य जायमानं समासाद्यन्यतमवृत्तिविधानम् इत्यर्थः। पदनिष्ठोद्देश्यतानिरूपितविधेयताश्रयो विधिः पदविधिरिति भावः। तथा च वृत्त्यर्थावबोधाय कल्पितविग्रहवाक्यार्थबोधनसमर्थो भवतीति सूत्रार्थः। समासादिवृत्तिनिष्पन्नं पदं विग्रहवाक्यार्थबोधनाय समर्थमितिभावः। वृत्त्यर्थावबोधनं च विग्रहवाक्याज्जायते। एवं च यत् पदं विग्रहवाक्यार्थं बोधयति, तदेव पदं वाक्यार्थबोधनव्यापारयुक्तत्वात् वृत्तिमद् इत्युच्यते, तच्च पदं समर्थं भवति, शिष्टबोधसामर्थ्यावच्छिन्नत्वात्।

अयंभावः– बोधजनकं पदं समर्थमित्युच्यते। तस्मिन् समर्थे पदे सामर्थ्यञ्च शक्तिरूपम्। तच्च शक्तिरूपं सामर्थ्यं द्विविधम् – व्यपेक्षारूपम् एकार्थीभावरूपं च। तत्र समासादि-पञ्चविधान्यतमवृत्तिरहितेषु पदेषु व्यपेक्षासामर्थ्यम्, विशिष्टा अपेक्षा व्यपेक्षेति व्युत्पत्तेः। अपेक्षायां वैशिष्ट्यञ्च समासादिवृत्तिराहित्यरूपम्। यस्यां शक्तौ समासादिवृत्तीनाम् अपेक्षा विगता वर्तते सा व्यपेक्षाभिधा शक्तिरिति भावः। समासादिपञ्चविधान्यतमवृत्तिसहितेषु पदेषु पुनः एकार्थीभावरूपं सामर्थ्यम् भवति। न एकः इत्यनेकः, अनेकश्चासावर्थः, अनेकार्थः। अनेकार्थः एकार्थो भवतीति एकार्थीभावः इति व्युत्पत्तेः। अस्मिन् विग्रहे एकार्थपदात् अभूततद्भावे च्वीप्रत्यये इत्वे, दीर्घे च सति एकार्थी भवति इति वाक्यं निष्पद्यते। ततः भवतीति भाव इत्यर्थे भूधातोः घञि भाव इति प्रातिपदिकादेकार्थी इति अव्ययपदस्य उपपदसमासे सति एकार्थीभावः इति पदं निष्पद्यते।

एकार्थीभावो हि बुद्धौ बुध्यमानस्य हृदिस्थस्य आन्तरभावापन्नस्य वृत्तिमत्पदस्य सामर्थ्यम्। तत्रैकार्थीभावसत्त्वादेव वृत्तिमत् तत्पदं वृत्त्यर्थावबोधनक्षमं समर्थं भवति। यच्च तादृशसामर्थ्यशालि समर्थं पदम्, तदेव वृत्तिमत् पदम्, तादृशेषु एव पदेषु वृत्तयो भवन्ति।

एतदिहावधेयम्– एकार्थीभावव्यपेक्षारूपमेतत्सामर्थ्यद्वयमेव क्रमेण जहत्स्वार्थाऽजहत्स्वार्था च। तदुक्तं कौण्डभट्टेन– 'समर्थः पदविधिः' इति सूत्रे

१ वै.सि.कौ.सर्वसमासशेषप्रकरणम्

२ पा.सू.२.१.१

भाष्यकारैरनेकधोक्तेष्वपि पक्षेषु जहत्स्वार्थाऽजहत्स्वार्थपक्षयोरेव एकार्थीभावव्यपेक्षारूपयोः पर्यवसानं लभ्यत[३] इति।

**जहत्स्वार्थाऽजहत्स्वार्थे द्वे वृत्ती ते पुनस्त्रिधा।**
**भेदः संसर्ग उभयं चेति वाच्यव्यवस्थितेः।।**[४]

एवञ्चैकार्थीभावस्य अपरं नाम जहत्स्वार्था वृत्तिः। तथा व्यपेक्षायरूपसामर्थ्यस्य नामान्तरम् अजहत्स्वार्था वृत्तिरिति । जहत्स्वार्थपदे 'ओ हाक् त्यागे'[५] इत्यस्माद् धातोः शतरि जसि जहति त्यजन्ति स्वानि (आत्मीयानि पदानि) यमर्थम्, सः अर्थः जहत्स्वः। जहत्स्वः अर्थः यस्यां वृत्तौ सा वृत्तिः जहत्स्वार्थेति द्विः बहुव्रीहिः। तद्भिन्ना वृत्तिरजहत्स्वार्था, यस्यां पदानि स्वार्थं न जहति, प्रत्युत स्वार्थं प्रतिपादयन्ति। एवञ्च पदार्थप्रतिपादकतारूपम् अजहत्स्वार्थत्वम्, व्यपेक्षासामर्थ्यस्य लक्षणं बोध्यम्।

यत्तु ज्ञानेन्द्रसरस्वती-परिव्राजकाचार्येण तत्त्वबोधिन्याम् अथ च वासुदेवदीक्षितेन बालमनोरमायां व्यपेक्षालक्षणं प्रोक्तम्- स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादिवशाद् यः परस्परसंबन्धः सा व्यपेक्षेति[६], अथ च स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादिवशाद् यः परस्परान्वय तद् व्यपेक्षाभिधं सामर्थ्यम्[७] इति, तद् द्वयमपि अविचारितरमणीयम्, यतोहि पदानां परस्परसंबन्धः परस्परान्वयो वा आकाङ्क्षाद्यधीन इतीह लक्षणे स्वयमेव ताभ्यामुक्तत्वात्। तथा च लक्षणमिदम् आकाङ्क्षादेः सम्भवेत्, न पुनः व्यपेक्षायाः। व्यपेक्षा तु न संबन्धमुपस्थापयति। यतोहि स च संबन्धः आकाङ्क्षाभास्यः। तथाच तयोर्लक्षणे आकाङ्क्षालक्षणसांकर्यं वेदितव्यम्। तस्माद् एतद् व्यपेक्षालक्षणद्वयं भ्रामकमिति विभावनीयम्। वस्तुत इह समासादिवृत्तिरहितानां पदानां पदार्थप्रतिपादकत्वमेव निर्दुष्टं व्यपेक्षालक्षणमवधारणीयम्।

किञ्च तत्रैव ताभ्यां परिव्राजकदीक्षिताभ्याम् आचार्याभ्याम् एकार्थीभावलक्षणं मदुक्तरीत्यैव निर्धारितम्- स च (एकार्थीभावः) प्रक्रियादशायां पृथगर्थत्वेन प्रथमगृहीतस्य विशिष्टैकार्थत्वरूपः[८] इति, एकार्थीभावलक्षणसामर्थ्यन्तु प्रक्रियादशायां प्रत्येकमर्थवत्त्वेन पृथग् गृहीतानां पदानां समुदायशक्त्या विशिष्टैकार्थप्रतिपादकतारूपम्[९] इति च। इह हि उभाभ्यामाचार्याभ्याम् एकार्थीभावस्य जहत्स्वार्थायाः वृत्तेः विशिष्टैकार्थप्रतिपादकता लक्षिता, परं व्यपेक्षायाः

३ वै.भू.सा. समासशक्तिनि.
४ वै.भू.सा. सांसशक्तिनि. का.३०-३१
५ पा.धा.सं.१०९०
६ वै.सि.कौ.तत्त्वबो.पा.सू.२.१.१
७ वै.सि.कौ.बालमनो.पा.सू.२.१.१
८ वै.सि.कौ.तत्त्वबो.पा.सू.२.१.१
९ वै.सि.कौ.बालमनो.पा.सू.२.१.१

अजहत्स्वार्थवृतेः संबन्धबोधकता समीरिता, यश्च संबन्धः आकाङ्क्षादिभास्यः इत्यपि स्वीकृतमित्युभयत्र फलभेदो भवति। यदि चोभयोः सामर्थ्ययोर्मिथः फलभेदोऽङ्गीकृतः स्यात्तर्हि भाष्यकारादिभिर्वैयाकरणैरेकत्रैव वृत्तिमत्पदेषूभयमपि सामर्थ्यं संबन्धार्थविशिष्टार्थबोधनाय स्वीकृतं स्यात्। यन्नैवं तन्नैवमुभयोः फलभेद इति युक्तिर्बोध्या।

इदमत्र रहस्यम्–एकार्थीभावसामर्थ्यं जहत्स्वार्थवृत्तिः। समासादिपञ्चविधान्यतमवृत्तिमत्सु पदेषु, तानि पदानि प्रक्रियादशायां विग्रहवाक्ये व्यपेक्षाशक्त्या उपस्थापितान् अर्थान् परित्यजन्ति। तदानीं समासादिवृत्तिसमनन्तरमेव तानि पदानि एकार्थीभावशक्त्या पूर्वोपस्थितान् अर्थान् समेकीकृत्य विशिष्टैकार्थम् उपस्थापयन्ति। अत एवैकार्थीभावशक्तिः, जहत्स्वार्थावृत्तिरित्युच्यते। यथा– पङ्कजपदात् प्रक्रियादशायां विग्रहकाले व्यपेक्षाशक्त्या पङ्कजनिकर्तृत्वप्रकारिका उपस्थितिः, किन्तु कृत्समासवृत्तिसमनन्तरमेव एकार्थीभावशक्त्या तस्मात् पद्मत्वप्रकारकः विशिष्टैकार्थः उपस्थितो भवति। तत्र समासघटकीकृतं पङ्कपदं जशब्दश्च स्वं स्वमर्थं जहीतः। एवमेव समासादिवृत्तिमत्सु पदेषु एकार्थीभावरूपसमुदायशक्तिस्वीकारादेव राजपुरुषादिपदं पृथगुपस्थितान् तांस्तानर्थान् विहाय विशिष्टैकार्थं प्रतिपादयन्ति। तथा हि– ''राज्ञः पुरुषः'' इत्यादिविग्रहवाक्ये स्वत्वसंबन्धेन राजत्वप्रकारकराजविशेष्यकोऽर्थः पृथगुपस्थितो भवति, तत्र 'समृद्धस्य राज्ञः' इत्यादिप्रकारेण विशेषणयोगो भवितुमर्हति, किन्तु वृत्तौ सत्याम् एकार्थीभावशक्त्या राजप्रकारकः पुरुषविशेष्यकः एकार्थोपस्थितिः। तत्र राजपदं पुरुषपदं च पूर्वोपस्थितविशेष्यविशेषणभावरूपमर्थं सर्वथा जहीतः, भिन्नं च विशेष्यविशेषणभावं स्वीकुरुतः। अत एव तत्र समस्ते 'राजपुरुषः' इत्यादौ राजपदार्थे समृद्धस्येति विशेषणं नान्वेति, तत्र स्वातन्त्र्येण विशेष्यतया राजपदार्थस्योपस्थितेरभावात्। अन्यथा विग्रहवाक्य इव 'समृद्धस्य राजपुरुषः' इत्यप्यापद्येत।

किञ्च यथा वृषभपदात् बलीवर्दरूपार्थोपस्थितौ जातायां पुनस्तदर्थे वृषभघटकीभूतस्य वृषशब्दस्य बोधकत्वकल्पनं निष्फलत्वादनुचितम्, तथैव राजपुरुषादौ समस्तपदात् एकार्थीभावशक्त्या राजविशिष्टपुरुषभानसम्भवे पुनः राजपुरुषपदयोरपि तद्बोधकत्वकल्पनमनुचितम् भवति। न चैवं 'देवदत्तस्य गुरुकुलम्' इत्यादावनन्वयापत्तिः, तत्रापि देवदत्तपदोत्तरषष्ठ्यर्थस्य गुरुणान्वयादिति वाच्यम्, तत्रापि षष्ठ्यर्थस्य प्रधानीभूतकुलेनैवान्वयात्। संबन्धस्तूपस्थितगुरुद्वारक एव षष्ठ्यर्थः, न तु तदितरः। उक्तञ्च–

**समुदायेन संबन्धो येषां गुरुकुलादिना।**
**संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह।।**[१०]

यद्वा ससम्बन्धिकपदार्थस्यैकदेशत्वेऽपि भवत्येव विशेषणान्वयः उक्तञ्च हरिणा –

**सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते।**

१० वा.प.३.१४.४८

**वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते।[११] इति।।**

नन्वेवं राज्ञोऽपि नित्यसापेक्षत्वात् 'राजपुरुषः' इत्यादावेकदेशत्वेऽपि राजपदार्थेन समं समृद्धस्येति विशेषणस्यान्वयोऽस्त्विति चेन्मैवम्, ईशितुः राज्ञः ईशितव्यं प्रति साकाङ्क्षत्वेऽपि समृद्धं प्रति अनाकाङ्क्षत्वात्, राजपदस्य संबन्धिवाचकत्वाभावाच्च। तस्माद् वृत्तिमत्पदेषु व्यपेक्षारूपयाऽवयवशक्त्या पूर्वक्लृप्तया विशिष्टार्थोपस्थितेरभावात् विशिष्टार्थोपस्थितिविषयकम् एकार्थीभावशक्त्यन्तरम् एवाङ्गीकरणीयम्। तदिदं सर्वं विचिन्त्योक्तं कौण्डभटेन भूषणे –

**समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्।।**
**बहूनां वृत्तिधर्माणां वचनैरेव साधने।**
**स्यान्महद् गौरवं तस्मादेकार्थीभाव आश्रितः।।[१२]**

समासे इति वृत्तिमात्रोपलक्षणम्। समर्थः पदविधिः[१३] इत्यत्र पदमुद्दिश्य यो विधीयते समासादिः, स समर्थः। विग्रहवाक्यार्थाभिधाने शक्तः सन् साधुरिति सूत्रार्थस्य भाष्याल्लाभात्। पदोद्देश्यकविधित्वञ्च कृत्तद्धितसमासैकशेषसद्यान्तधातुरूपासु पञ्चस्वपि वृत्तिषु अस्त्येव। यतोहि-पदसंज्ञाप्रयोकप्रत्ययोत्पत्तिप्रयोजकसंज्ञा- विधायकशास्त्रीयोद्देश्यतावच्छेदकरूपावच्छिन्न-सम्पादकविधित्वं पदविधित्वम्[१४] इति। तत्र पदसंज्ञाप्रयोजकः राजपुरुषः इत्यादौ स्वादिप्रत्ययः, तस्योत्पत्तौ प्रयोजकीभूता संज्ञा प्रातिपदिकसंज्ञा, तस्याः विधायकशास्त्रं 'कृत्तद्धितसमासाश्च'[१५] इति, तच्छात्रीयोद्देश्यतावच्छेदकता कृत्तद्धितसमासान्यतमत्वम्, तद्रूपावच्छिन्नाः कृत्तद्धितसमासाः, तत्सम्पादकविधिः 'षष्ठी'[१६] इति षष्ठीतत्पुरुषसमासविधायकसूत्रम्, तच्च पदविधिः, इत्थं लक्षणसमन्वयो भवति।

स चायं पदविधिः विग्रहवाक्यार्थाभिधाने समर्थः। सामर्थ्यञ्चास्यैकार्थीभावशक्तिरूपमेव, संमिलितार्थस्य संगतार्थस्य संश्लिष्टार्थस्य विशिष्टैकार्थस्य उपस्थापकत्वात्। समर्थपदस्य संबन्धार्थः समर्थः इति व्युत्पत्तिपक्षं लक्ष्यीकृत्य तथास्वीकारात्।

व्यपेक्षासामर्थ्यस्वीकारे तु तदानीं स्वातन्त्र्येण अवयवार्थोपस्थितौ नैका विसंगतय आपतेयुः। तद्यथा पूर्वमुक्तम् 'समृद्धस्य राज्ञः इत्यादिवत् 'समृद्धस्य राजपुरुषः' इत्यादयः प्रयोगा अपि आपद्येरन्। मीमांसायां ''वर्षासुरथकारोऽग्निमादधीत'' इत्यत्रापि रथकारपदेन अवयवशक्त्या रथं करोतीति विग्रहवाक्यार्थस्य ब्राह्मणविषयतयैवोपपत्तौ जातिविशेषस्याधिकारित्वं

११ वा.प.३.१४.४७
१२ वै.भू.सा. सांसशक्तिनि. का.३१.३२
१३ पा.सू. २.१.१
१४ ल.श.शे.नित्यानन्द.टिप्पणी.पा.सू. २.१.१
१५ पा.सू. १.२.४६
१६ पा.सू. २.२.२८

प्रकल्प्यापूर्वविद्याकल्पनमयुक्तं स्यात्। 'वषट्कर्तुः प्रथमभक्षः' इत्यत्र अवयवार्थप्रसिद्धौ सत्यां भक्षणमनूद्य प्राथम्यविधानमनिष्टमापद्येत। 'अरुणयाऽपिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति' इत्यत्रऽपिङ्गाक्ष्या एकहायन्या इति समस्तपदाभ्यामपि व्यपेक्षाशक्त्या गुणरूपावयवार्थोपस्थितौ सत्यां द्रव्यानुपलब्ध्या अरुणयेति पदात् उपस्थितेन आरुण्येन गुणेन क्रयणं न सम्भवेत्। तस्मादिह सर्वत्र एकार्थीभावशक्त्या विशिष्टैकार्थोपस्थितिरनिच्छयापि नैयायिकैर्मीमांसकैरपि अङ्गीकार्यैव।

यद्यपि व्यपेक्षावादिनो नैयायिका मीमांसकाश्च इह रथकारादिषु सर्वत्र वृत्तिद्वयमङ्गीकृत्य पूर्वं व्यपेक्षाशक्त्या घटकपदार्थबोधं, ततो लक्षणया विशिष्टैकार्थबोधमामनन्ति, तथापि तेषां मते वृत्तिद्वयाङ्गीकाराद् महद् गौरवं, नवीनवचनकल्पनं, सिद्धन्यायबाधश्च दुष्परिहरं स्यात्। तथाहि- पदार्थैकदेशे घटत्वेऽन्वयाभिप्रायेण 'नित्यो घटः' इत्यादिप्रयोगवारणाय 'पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेन' इति न्यायस्य प्रसिद्धत्वेऽपि व्यपेक्षावादिभिः 'समृद्धस्य राजपुरुषः' इति प्रयोगवारणाय पुनः 'विशेषणानां वृत्तिर्न, वृत्तस्य च विशेषणयोगो न' इति नवीनं वचनं कल्पनीयं स्यात्। किञ्चेह अवयवशक्त्या उपस्थितयोः राजपुरुषनामार्थयोः 'नामार्थयोरभेदादतिरिक्तः संबन्धोऽव्युत्पन्नः' इति न्यायेन प्राप्तस्य अभेदान्वयस्य वारणाय तन्न्यायभञ्जनमवश्यमापतेत्। इहैकार्थीभावरूपसमुदायशक्तिस्वीकारे तु स्वत्वसंबन्धेन राजविशिष्टपुरुषपदार्थोपस्थित्या तत्र राजपदार्थस्यैकदेशत्वेन 'पदार्थः पदार्थेनान्वेति' इति न्यायेनैव विशेषणान्तरस्य अन्वयबाधसिद्धौ तदर्थं नहि कस्यापि नवीनस्य वचनस्याङ्गीकारो नवा कस्यापि प्रसिद्धस्य न्यायस्य बाधप्रसर आपतति।

किञ्च वृत्तिमत्पदेषु एकार्थीभावानङ्गीकारे पदे-पदेऽन्येऽनेके दोषाः संभवेयुः। तन्निवारणाय क्वचिद् नवीनवचनकल्पनं कुहचन व्युत्पत्तिभञ्जनं चावश्यं कर्तव्यं स्यात्। तथाहि- 'धवखदिरौ' इह अश्रूयमाणस्य चपदस्य अर्थबोधाय 'अनेकसुबन्तं चार्थे' इत्थमतिरिक्तं वचनं स्वीकरणीयं स्यात्। एवमेव निष्कौशाम्बिः इत्यादौ क्रान्ताद्यर्थम्, गोयुक्तो रथः गोरथः इत्यादौ युक्तार्थम्, घृतपूर्णो घटः घृतघटः इत्यादौ पूर्णार्थम्, गुडेन मिश्राः धानाः गुडधानाः इत्यादौ मिश्रार्थम्।, केशानां संघाता चूडा यस्य सः केशचूडः इत्यादौ संघातार्थम्, सुवर्णालङ्कार इत्यादौ बहुव्रीहौ विकारार्थम्, द्विदशा इत्यादौ सुजर्थम्, सप्त सप्त पर्णानि यस्य सः सप्तपर्णः इत्यादौ वीप्सार्थम्, घनश्यामः तथा हंसगमनमिव गमनं यस्य स हंसगमन इत्यादौ इवार्थञ्च तत्तद्वचनं कल्प्यं स्यात्। एकार्थीभावशक्त्या तु इह भासमानः अतिरिक्तः सर्वोऽपि अर्थः विशिष्टः सन् समासादिवृत्तिमत्पदादेव भासते। तदर्थं नान्यद् वचनान्तरं यत्नान्तरं वापेक्षते, इत्यत इहैकार्थीभावस्यैवौचित्यं प्रतिष्ठते। तदुक्तं कौण्डभट्टेन भूषणे -

**चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम्।।**
**कर्तव्यं ते न्यायसिद्धं त्वस्माकं तदिति स्थितिः।।**[१७]

१७ वै.भू.सा. सामासशक्तिनि. का.३३

अयमाशयः- षष्ठ्यर्थबहुव्रीहौ चित्रा गावो यस्य सः 'चित्रगुः' इत्यादौ चित्राभिन्नगोस्वाम्यादिप्रतीतिरनुभवसिद्धा। सा चावयवशक्त्या न स्यात्, तत्र कथंचिद् वृत्तिद्वयमङ्गीकृत्य लक्षणासम्भवेऽपि अषष्ठ्यर्थबहुव्रीहौ 'प्राप्तोदको ग्रामः' इत्यादौ लक्षणाया असम्भवो भवति। तथाहि- विग्रहवाक्यात् प्राप्तिकर्त्रभिन्नमुदकमित्यादिबोधोत्तरं प्राप्तोदकपदस्य तत्सम्बन्धिग्रामलक्षणायां प्राप्तिकर्त्रभिन्नोदकसंबन्धिनो लाभेऽपि उदककर्तृप्राप्तिकर्म ग्राम इत्यर्थालाभात्। न च प्राप्तोदकः इत्यादौ पूर्वपदप्राप्तघटकस्य क्तप्रत्ययस्यैव कर्त्रर्थकस्य कर्मणि लक्षणेति वाच्यम्, तथा सति समानविभक्तिकयोः उदकक्तान्तपदयोः समानाधिकरण्यात् तदर्थयोरभेदान्वयव्युत्पत्तेः, उदकाभिन्नं प्राप्तिकर्मेति बाधितार्थाभ्युपगमः प्रसज्येत्। कर्मलाक्षणिकतान्तार्थोदकपदार्थयोरभेदान्वयाऽनभ्युपगमे समानाधिकरणप्रातिपदिकार्थयोर-भेदान्वयव्युत्पत्तिभङ्गापत्तेः, तादृशव्युत्पत्तेरत्रैव व्यभिचारात् इति भावः।

ननु समानाधिकरणनामार्थयोरभेदान्वयः इति व्युत्पत्तौ समानाधिकरणस्यैकार्थाभिधायित्वस्यैव निवेशेन इह उदकस्य लाक्षणिकक्तप्रत्ययार्थकर्मणि नान्वयः, किन्तु तस्य क्तप्रकृत्यर्थे प्राप्तौ भेदेन कर्तृत्वसंबन्धेनान्वये सति उदककर्तृकप्राप्तिः इत्यर्थो लभ्येतेति चेन्न, प्राप्तेर्धात्वर्थतया कर्तृतासंबन्धेन भेदेनोदकस्य तत्रान्वयासम्भवात्। नामार्थधात्वर्थयोः साक्षाद् भेदेनान्वयस्याव्युत्पन्नत्वादिति भावः। अन्यथा उक्तव्युत्पत्त्यनभ्युपगमे 'देवदत्तेन पच्यते' इत्यर्थे 'देवदत्तः पच्यत' इति प्रयोगोऽप्यापद्येत। भेदेन कर्तृतासंबन्धेन धात्वर्थे देवदत्तस्यान्वयाङ्गीकारात्।

अथेह उदकाभिन्नकर्तृका प्राप्तिरिति बोधोत्तरं वाक्येन तत्संबन्धिग्रामो लक्ष्यते इति चेन्न, प्राप्तेर्धात्वर्थतया क्तार्थकर्तारं प्रति विशेष्यताया असम्भवात्, 'प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यम्' इति व्युत्पत्तेः। किञ्च प्राप्तपदे प्राप्तेर्विशेष्यत्वे नामजन्यप्रतीतिविशेषस्यैव नामार्थत्वात् तस्या एव नामार्थत्वेन, तस्या एवोदकेन सममभेदान्वयापत्तेश्च। एवम् ऊढरथः इत्यत्र रथकर्मकवहनकर्ता इति, उपहृतपशुः इत्यत्र पशुकर्मकोपहरणोद्देश्यः इति, उद्धृतौदना इत्यत्र ओदनकर्मकोद्धरणावधिः इति, बहुपाचिका इत्यत्र बहुपाककर्त्राधिकरणम् इति विशिष्टबोधोऽभ्युपगम्यते। स चावयवशक्त्या न संभवति। अत इह घटत्वविशिटे घटपदस्येव उदककर्तृकप्राप्तिकर्मत्वविशिष्टे प्राप्तोदकपदस्य शक्तिरिति समुदायशक्तिरूपैकार्थीभावेनैव निर्वाह इति सर्वथौचित्यमावहति।।

**पुनश्चान्तेऽवधेयम्-** एकार्थीभावोऽयं प्रक्रियादशायाम् अलौकिकविग्रहवाक्ये समासादिवृत्तिसमनन्तरकाल एव प्रादुर्भवति। ततः पूर्वं पदनिष्ठा व्यपेक्षाशक्तिः पदार्थान् प्रकाश्य समासादिवृत्तेः पूर्वं विरमति। ततो विरम्य व्यापाराभाव इति न्यायेन व्यपेक्षाशक्तेर्व्यापाराभावात् समासादिसमकालमेवैकार्थीभावशक्तिः व्याप्रियते। इयं च समुदायनिष्ठा शक्तिः पूर्वोपस्थितं

पदार्थस्वरूपं जहाति, तत्र विशेष्यविशेषणादि परिवर्तयति, क्वचित् तानर्थान् सर्वथा त्यजति, क्वचिच्च यथापेक्षितान् गृह्णाति। अत एव इयं जहत्स्वार्थवृत्तिरिति भाष्यप्रामाण्येन भूषणसारे कौण्डभटेनोक्तम्– 'जहत्स्वार्थाजहत्स्वार्थपक्षयोरेवैकार्थीभावव्यपेक्षारूपयोः पर्यवसानं लभ्यते'[१८] इति। अस्यां स्थितौ बालमनोरमायां वासुदेवदीक्षितेन प्रकीर्तितं प्रकरणमिदं सांकर्यदोषग्रस्तं संशयास्पदं व्याकरणसिद्धान्तविरुद्धं प्रतिभाति। तदित्थं तत्प्रकरणम् 'अलौकिकविग्रहवाक्ये श्रूयमाणानां च शब्दानां क्लृप्तशक्तित्यागे मानाभावात् प्रत्येकशक्तिसहकृतया समुदायशक्त्या विशिष्टोपस्थितिः। ततश्च अयमेकार्थीभावः अजहत्स्वार्था वृत्तिरिष्यते। वृत्तिविषये पदानां प्रत्येकमनर्थकत्वमाश्रित्य जहत्स्वार्था वृत्तिस्तु नाश्रयितुं युक्ता, महाबाहुः सुपन्थाः इत्यादौ आत्त्वाद्यनापत्तेः। वृत्तौ महदादिशब्दानामनर्थकत्वात्। अर्थवग्रहणसम्भवे अनर्थकस्य ''आन्महतः''[१९] इत्यादौ ग्रहणायोगात्। तदुक्तम् –'जहत्स्वार्था तु तत्रैव यत्र रूढिविरोधिनी' इति। अवयवार्थविरुद्धो यत्र समुदायार्थस्तत्रैव सेति तदर्थः। यथा– 'अश्वकर्णमण्डपादौ' इति। वस्तुतो बालमनोरमाकार इह नैयायिकवासनया प्रकरणमिदं जग्रन्थ। व्यपेक्षावादिनो नैयायिका सर्वत्र वृत्तिमत्पदेषु व्यपेक्षाशक्त्या सह लक्षणया पदार्थबोधं निर्वाहयन्ति। केवलं नित्यसमासस्थले अश्वकर्णमण्डपादौ गत्यन्तराभावात्, जहत्स्वार्थवृत्तिमेकार्थीभावम् अभ्युपगच्छन्ति। तदभ्युपगमदृष्ट्यैव 'जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी' इति कारिकोपन्यासः अभियुक्तवचनोद्धरणरूपेणकृतं दर्पणे[२०] बालमनोरमायां च विज्ञेयम्। अतो नायं व्याकरणसिद्धान्तः।

वस्तुतस्तु– एकार्थीभावेनोपस्थापिते विशिष्टैकार्थे अवयवपदानां वाचकताभाव एव अवयवार्थत्यागः, न तु तत्र विशिष्टेऽर्थे सर्वथा अवयवार्थप्रतीतेरभावः। रेखागवयन्यायेन तत्र विशिष्टेऽर्थे अवयवपदार्थप्रतीतिर्जायत एव। अत एव पूर्वपदार्थप्रधानोऽव्ययीभावः इत्यादि समासलक्षणं वैयाकरणैः स्वीक्रियते। अत एव 'आन्महतः' इत्यादिसूत्राणां नानर्थके प्रवृत्तिरङ्गीकृतेति। एवञ्च व्याकरणनये एकार्थीभावः जहत्स्वार्थः एव, स च सर्वेषु वृत्तिमत्पदेषु विद्यते, तद्रहितेषु च व्यपेक्षासामर्थ्यमिति सर्वं समञ्जसमितिविभावनीयम्।

विषयोऽयं विशालः प्राचीनः बहुसमीक्षितश्च। अतोऽतलस्पृशोऽगाधव्याकरणपारावारात् सरयूपारीणोऽहं किञ्चिद् उद्धृत्य न्यवेदयम्। तत्र त्रुटयो या मामकीना इति क्षन्तव्योऽयं जनः।।

*****

१८ वै.भू.सा. सांसशक्तिनि.

१९ पा.सू. ६.३.४६

२० वै.भू.सा. सांसशक्तिनि. दर्पणटीका

# समासशक्तिविमर्शः

**प्रो.रामसलाहीद्विवेदी**
आचार्यः, व्याकरणविभागः,
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
कटवारिया सराय, नईदिल्ली–१६

वैयाकरणसिद्धान्तेषु वाक्यार्थविवेचनक्रमस्यैव स्थानं सर्वोपरि भवति। तत्र च लोकं वेदमञ्चासाद्य वाक्यार्थप्रतिपत्तय उपायानाचरन्ति वैयाकरणाः। तदेवं वाक्यस्य प्रामुख्यमर्थसमाप्तौ परिकल्प्यन्ति।[१] यथा वेदे कः शब्द इति प्रश्ने भगवान् भाष्यकारः वाक्यमेव दर्शितवान् 'झषेत्वोर्जे' इत्यादिरूपम्। तथैव लोकेऽपि वाक्यानामेव प्रामुख्यं निर्भ्रान्तमनुभूयते, प्रयुज्यते च। वाक्यनिर्माणे वाक्यार्थनिर्माणे वा समासस्य महती भूमिकावलोक्यते। तत्र समासादौ वृत्तिर्वर्तते न वा इत्यादिविचार्यते। 'समर्थः पदविधिः'[२] इति सूत्रे समर्थपदस्य 'संश्लिष्टोऽर्थः संलग्नो वाऽर्थः'[३] इत्यादिरूपेण व्याख्यानमुपलभ्यते भाष्ये। न तु समानोऽर्थ इत्यादिरूपेण, तत्र व्याख्याने सार्थ्यस्याभाव एव परिलक्षितः भाष्यकृता। यद्यपि समोऽर्थः समर्थ इत्यस्मिन् व्याख्याने दीर्घत्वापत्तिः प्रसरति, तथापि 'व्यवहृपणयोः समर्थयोः'[४] इति निर्देशात् शकन्ध्वादिगणस्य आकृतिगणतामवधार्य पररूपविधिना अत्रापि समर्थ इति भवितुमर्हति। तेन संश्लिष्टोऽर्थः समर्थ इति व्याख्यानमुपयुज्यते। संश्लिष्टत्वञ्च वृत्तिद्वारा आकाङ्क्षाद्वारा वा, व्यपेक्षावादिनः सर्वत्र आकाङ्क्षायोग्यतासन्निधिवशादेव समर्थत्वं मन्वते।

वैयाकरणास्तु वृत्तिद्वारैव समर्थत्वमुपपादयन्ति। यतः शब्दशक्तिवादिनः वैयाकरणाः भवन्ति। शब्दत्वञ्च वाक्यमेव। अत एव 'वचोऽशब्दसंज्ञायाम्'[५] इत्यादिना व्याकरणशास्त्रे शब्दस्य संज्ञायां वाक्यमिति पदं निष्पद्यते। तस्मात् मुख्यव्यवहारः वाक्येनैव, व्यवहारस्य शक्तिग्राहकशिरोमणित्वात् प्रथमतः तत्रावधारितं शक्तिग्रहमपसार्य ततोऽधः पदेषु कल्पनं वाक्यार्थेषु च सम्बद्धार्थस्यावबोधाय वृत्त्यन्तरकल्पनमनुपयुक्तमेव भवतीति तेषां मतम्। तदेव भर्तृहरिरप्याह–

१ पदसमूहो वाक्यमर्थसमाप्तौ, न्यायभाष्यकारः वात्स्यायनः। प.ल.म.शक्ति.

२ पा.सू.२.१.१

३ महाभाष्यम्.२.१.१

४ पा.सू.२.३.५७

५ पा.सू.७.३.६७

**'पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।**
**वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन।।'**[६]

अयमर्थः यथा ऋकारादिवर्णेष्ववयवा प्रतिभाषमाना अपि न भवन्ति तथैव पदेषु प्रतीयमानाः वर्णा अपि न भवन्ति। पदान्यपि निरवयवान्येव भवन्ति। तानि च पदानि वाक्याद्भिन्नानि न सन्ति। यथा गुडमयं मोदकमिति कथनेन गुड एव मोदके सन्निविष्टो भवति तथैवात्रपि कथा। किञ्च लक्षणया सर्वेप्यर्थाः न सिद्धाः भवन्ति, अत एव रथन्तरं साम, कृष्णसर्प[७] इत्यादौ वाक्यात्कश्चितभिन्नः एवार्थः प्रतिपन्नो भवति, तस्मादेकत्र लक्षणा क्वचिच्छक्तिरिति व्यवस्थाभेदाद् गौरवं परिलक्ष्य सर्वत्र एकप्रसरतया शक्तिरेव अङ्गीकरणीया। तदेवाह भूषणे – **'समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्'**[८] इति। यथा पङ्कजशब्दे काचिद्रूढ़िरवलोक्यते तथैव समासेऽपि एकार्थीभावरूपा अखण्डैव वृत्तिरङ्गीकरणीया। अपि च वृत्त्यङ्गीकारे चास्ति लाघवम्, तदेवाह–

**'बहूनां वृत्तिधर्माणां वचनैरेव साधने।**
**स्यान्महद्गौरवं तस्मादेकार्थीभाव आश्रितः।।'**[९] इति।

व्यपेक्षावादिनां मते 'सविशेषणानां वृत्तिर्न वृत्तस्य विशेषणयोगो न'[१०], 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन, इत्यादिन्याया अङ्गीकरणीया भवन्ति। परन्तु एकार्थीभावमते एतन्न्यायजन्यं फलं सुतरामुपपद्यते। तदेवाह भगवान् भाष्यकारः –'अथैतस्मिन् व्यपेक्षायां सामर्थ्ये योऽसौ एकार्थीभावकृतो विशेषः स वक्तव्यः'[११] इत्यादि। एतेन स्पष्टं भवति यद्व्यपेक्षावादिमते गौरवमस्त्येव। एकार्थीभावपदस्य व्याख्यानं तु एवमवधार्यते एकश्चासौ अर्थ एकार्थः, न एकार्थोऽनेकार्थः, अनेकार्थाः यत्र एकीभवन्ति स एकार्थीभावः। अत्र च्विनिर्देशेन गौणत्वमभिव्यज्यते। यतः वृत्तौ समासघटकानां पदानां नास्ति कश्चिदर्थः तथापि तत्र कल्पनया शास्त्रकृन्मर्यादां व्यवस्थापयितुं कश्चिदर्थोऽवधार्यते, अतः सोऽर्थः केवलं काल्पनिकः, तस्मात् पदानामसत्त्वात् सत्ताव्यवहारोऽमुख्य एव। तदेव नागेशोप्याह मञ्जूषायाम् –'यथा पदानामसत्त्वात्तत्सत्ताव्यवहारो गौणः तथा तेषामेकार्थत्वव्यवहारोऽपीति बोध्यम्'[१२] इति। तस्माद् नागेशमत एकार्थीभावस्य लक्षणमेवमवलोकनीयम्– 'एवञ्च यत्किञ्चित्पदजन्यपृथगुपस्थितिविषयार्थकत्वेन लोके दृष्टानां शब्दानां

६ वाक्यपदीयम्, ब्रह्मकाण्डम् ७३
७ विशेषणं विशेष्येण बहुलम् पा.सू.२.१.५७ बहुलग्रहणात् क्वचिद्भिन्न एवार्थो भवति।
८ वैयाकरणभूषणसारः, समासशक्तिनिर्णयः का.३१
९ वैयाकरणभूषणसारः, समासशक्तिनिर्णयः का..३२
१० वैयाकरणभूषणसारः, समासशक्तिनिर्णयः
११ महाभाष्यम् पा.सू.२.१.२
१२ वैयाकरणसिद्धान्तलघुममजूषा, वृत्तिविचारः

विशिष्टविषयैकशक्त्यैवोपस्थितिजनकत्वमेकार्थीभाव इति फलितम्[१३] इति। पदकृत्यञ्च स्वयं कृतवान् यद्विभक्त्यन्ते एकार्थीभावस्य वारणाय 'दृष्टानामित्यन्तम्' इति। यतः विभक्त्यन्ताः प्रसिद्धार्थेषु तत्वेनाश्रयणीयाः भवन्ति, औपगवादौ तु प्रत्ययार्थाः शास्त्रकृत्प्रक्रियायाः विषयमात्रं भवन्ति।

आचार्यः कैयटोऽपि[१४] एकार्थीभावस्य सत्ताप्रतिपादने विशिष्टविषयैकशक्तिमिति हेतुरूपेण मेने। तयैवावयवार्थान्वितः समुदायार्थः प्रादुर्भवतीति, तदपेक्षया एकार्थीभाव उच्यत इत्युक्त्या आत्मीयां स्वीकृतिञ्च व्याजहार। वाक्ये यथा, आकाङ्क्षामूलकशक्तिवशाद्विशेष्य-विशेषणभावस्य प्रतिपत्तिर्जायते, वृत्तौ तु न तथा किन्तु अवयवशक्तिभ्यामाकाङ्क्षा-मूलकसमुदायशक्तिरेव तत्राभिमता भवति। उक्तञ्च ममजूषायां श्रीनागेशेन- 'अवयवशक्तिभ्यामाकांक्षामूलकसमुदायशक्तिसहकृताभ्यां नियतोद्बोधकवशात्पदार्थबोध एव जायमानो विशेष्यविशेषणभावापन्नविशिष्टविषयो भवति'[१५] इति। अत्र आकांक्षामूलकेत्यादिविशेषणं नित्यघट इति प्रयोगवारणाय, ऋद्धस्य राजपुरुष इत्यादिवारणाय च। नित्यसाकाङ्क्षस्थले देवदत्तस्य गुरुकुलं, शिवो भागवत इत्यादिप्रयोगाणामुपपत्तये भर्तृहरिसम्मतं कारिकाद्वयञ्चोदाजहार -

**सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते।**
**वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते।।'**
**'समुदायेन सम्बन्धो येषां गुरुकुलादिना।**
**संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह।।'**[१६] इति।

व्युत्पत्तिवादग्रन्थेऽपि 'यदि स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्वसम्बन्धेन प्रकृत्यर्थ एवैकत्वान्वयः, व्रीहित्वजातेः स्वरूपत एव व्रीह्यादिपदशक्यतावच्छेदकतयाऽन्वयितावच्छेदक-रूपेणाऽनुपस्थितेस्तत्र पदार्थान्तरस्याऽन्वयानुपपत्तेरिति मन्यते? तदा प्रकृतेऽपीदृश्येव गतिः'[१७] इत्यादिना इषद्विपरिणमय्य व्यवस्थोपपादिता। तदेव भाष्येऽपि 'भेदः संसर्ग एव, इत्यादिना एवं भूतप्रयोगाणां संग्रहाय कश्चिन्मार्गः प्रदर्शितः। 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' इति न्यायस्य बीजं तु विशेष्यस्य इतरविशेषणत्वविषयकशक्तिग्रहाविषयत्वस्य सत्वादेव बोद्धव्यम्। यत्र तु अन्वयोऽभिष्टो भवति तत्र तन्त्रदिना कश्चित्सार्थ्ययविशेषोऽवगन्तव्यः। अत एव वृत्तिसार्थ्ययात्पूर्वकल्पितपदार्थानां तन्त्रदिना विवक्षायां तेषां भानमपि जायते। अत एव द्विपुत्रादौ

१३ वैयाकरणसिद्धान्तलघुमञ्जूषा, वृत्तिविचारः
१४ पा.सू.२.१.१
१५ वैयाकरणसिद्धान्तलघुमञ्जूषा, वृत्तिविचारः
१६ वाक्यपदीयम् वृत्तिसमुद्देश ४७,४८
१७ व्युत्पत्तिवादः, अभेदान्वयविचारः

प्राक्प्रयुक्तायाः द्वित्वसंख्यायाः विवक्षणादेकपुत्रयोगः नोपपद्यते। किञ्च एकार्थीभावाभिमतः कश्चिद्विलक्षणोऽर्थः जायत एव, तदेव वर्षासु रथकारोऽग्नीमादधीत इत्यादौ रथकारपदेन यौगिकार्थः नाश्रियते, अपितु कश्चिज्जातिविशेश एव तत्र प्रतिपत्तिविषयो भवति। तथैव शास्त्रेषु आश्रितश्च भवति। यद्यपि श्रीदीक्षितेन–

**'अषष्ठ्यर्थबहुव्रीहौ व्युत्पत्त्यन्तरकल्पना।**
**क्लृप्तत्यागश्चास्ति तव तत्किं शक्तिं न कल्पयेः।।'**[१८]

इत्येषा कारिका एकार्थीभावस्य संस्थापनाय सादरमवतारिता। व्याख्यानञ्च प्राप्तोदको ग्राम इत्यस्य वाक्यस्य कृतम्। यथा प्रपूर्वकाप्धातोः 'गत्यर्थाकर्मकश्लिषशीङ्स्थाऽसवसजनरुहजीर्यतिभ्यश्च'[१९] इति सूत्रेण कर्तरि क्तप्रत्ययः, 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः......' इति नयेन प्रत्ययार्थस्यैव प्राधान्यात् प्राप्तपदं प्राप्तकर्तृरूपार्थस्य बोधकम्। तेन प्राप्तमुदकं यमिति विग्रहे वृत्त्यर्थावबोधकं वाक्यं विग्रह इति सिद्धान्तेन प्राप्तकर्त्र्यभिन्नोदककर्मीभूतो ग्राम इति वाक्यार्थः प्राप्तो भवति। परन्तु सिद्धान्ते उदककर्तृकप्राप्तिकर्मीभूतो ग्राम इत्येवार्थोऽभिमतो भवति। तस्मादेकार्थीभाव एवाश्रयणीयः, स च विलक्षणशक्त्या अभीष्टमर्थं प्रतिपादयति। प्रत्ययार्थस्यैव प्राधान्यमित्यनुरोधेन विशेष्यविशेषणभावस्य परिवर्तनं कर्तुमपि न शक्यमित्यादि। तस्मादेकार्थीभावमतिरिच्य नान्यागतिरिति कैयटानुरोधेन श्रीदीक्षितः स्वकीयं हार्दमभिव्यनक्ति। परन्तु नागेशः तस्माद्विपरीतमेव स्वकीयं मतमवधारयति।

नागेशमते वृत्तिविग्रहवाक्ययोः समानार्थकत्वमवश्यमेवापेक्षितम्। अत एव 'कालाः परिमाणिना'[२०] इति सूत्रस्थं भाष्यं संगच्छते। तत्र हि भाष्ये किं प्रधानोऽयं समास इति पृष्ट्वा उत्तरपदार्थप्रधान इत्युक्तम्। इदं तु ध्येयमत्र यदयं प्रश्नः समासमात्रविषयकः यद्वा वाक्यार्थसमासविषयक इति। अस्य पर्यालोचनया उत्तरञ्च सिद्ध्यति यदुभयविषयकोऽयं प्रश्नः। यतः तत्पुरुषसमासस्योत्तरपदार्थविषयकत्वेन प्रसिद्धत्वात् तत्र प्रश्नस्य नावसरः प्राप्नोति। तस्मात् समासपदं समासविग्रहोभयपरम्। तदैव परिच्छेद्यवाचिना सुबन्तेन सह कालाः समस्यन्ते इति 'कालाः परिमाणिना'[२१] इति सूत्रस्यार्थोऽपि जायते। मासो जातस्य यस्य सः मासजात इत्युदाहरणं परिमाणिसार्थ्ययात् परिच्छेद्यार्थेनास्य वाक्यस्य स्पष्टार्थता। तेन मासपरिच्छेद्यो जात इति वाक्यार्थः। तदेवं मासो जातस्येति विग्रहेऽपि जातस्यैव प्राधान्यम्, न तु विशेषणत्वादप्राधान्यमिति मन्तव्यम्। यद्यपि पचतीति पाचक इत्यस्मिन् विग्रहे धात्वर्थस्यैव प्राधान्यं कृद्वृत्तौ तु प्रत्ययार्थस्य, तथापि

१८ वैयाकरणभूषणसारकारिका समासशक्तिनिर्णयः ७

१९ पा.सू.३.४.७२

२० पा.सू.२.२.५

२१. पा.सू.२.२.५

तस्यागतिकगतित्वेन तथा स्वीकरणीयत्वेऽपि सर्वत्र तथा न मन्तव्यम्। तदेवं प्राप्ता भार्या यमित्यत्र पूर्वोत्तरपदयोरेकविशेष्यकप्रतीतिजनकत्वात् समानाधिकरण्यमुपपद्यते। तथा च तत्फलं पुंवद्भावेन प्राप्यते। यतः 'स्त्रियाः पुंवत्'[२२] इत्यस्मिन् सूत्रे वृत्तेः प्राक् सामानाधिकरण्यं यत्र तत्रैव पुंवद्भाव इति सिद्धान्त आसादितः। अत एव दर्शनीयायाः माता दर्शनीयामाता इत्यादौ वृत्तेः प्राक् समानाधिकरण्यस्याभावात् पुंवद्भावो न भाष्यसम्मतः। तेन स्वानुगुणं विग्रहवाक्यार्थपरिवर्तनमपि समासस्य कश्चिद्विलक्षणः स्वभावः, सोऽपि व्यपेक्षावादिभिः कथमुपपादयितुं शक्येत। तस्मादेकार्थीभावरूपावृत्तिरङ्गीकरणीयैव।

अन्यच्चैकार्थीभावरूपायाः वृत्तेः फलं वर्तते, यथा धवखदिरौ[२३], निष्कौशाम्बिः[२४], गोरथः, घृतघटः[२५], गुणधानाः[२६], केशचूडः[२७], सुवर्णालङ्कार[२८], द्विदशाः[२९], सप्तपर्णा इत्यादौ इतरेतरयोगनिष्क्रान्तयुक्तपूर्णमिश्रसंघातविकारसुच्प्रत्ययलोपवीप्साद्यर्थस्य प्रतीतिः। एतेषामर्थानां तत्तदर्थे संकेतग्राहकत्वं तत्तद्विधिकर्तृकशास्त्रणामेव।

केचन तु लक्षणयैव समासशक्तेः गतार्थतां साधयन्ति। तद्यथा चित्रगुरित्यादौ गोपदस्य गोस्वामिनि लक्षणा। अत्र विचार्यते यच्चित्रपदघटकं गो इति पदं गोस्वामिन्यर्थे लक्षणया सिद्धं तथा गोपदार्थस्य एकदेशत्वात् चित्रासममभेदान्वयो न स्यात्तस्य। दृश्यते च सोऽन्वयः। तस्मात् विलक्षणः एकार्थीभाव अङ्गीकरणीयः। किञ्च चित्रगवीणामित्यत्र स्वाम्याद्यर्थस्य प्रतीतिः लक्षणया न शक्यते। तत्र विचार्यते क्व लक्षणा, यदि चित्र पदे सा तदा चित्रस्वामी गौः इति बोधः जायते। नापि गोपदे लक्षणा तदा गोस्वामिचित्रः इत्यर्थः जायेत। न च प्रथमं तावत् चित्रपदस्य चित्रवदर्थस्य बोधकत्वात् स्वाव्यवहितपूर्ववर्तित्वाच्च तदुपस्थापितेनार्थेन गोपदस्याभेदान्वयं कृत्वा तादृशोऽर्थ आसाद्यते इत्यपि न वक्तव्यम्। अत्र विनिगमनाविरहेण कस्मिन् पदे लक्षणा इत्यवधारयितुं न शक्यते। यद्यपि गोपदे साक्षात्सम्बन्धः पदार्थान्तरस्य, तथापि प्राप्तोदकः, कृतविश्व इत्यादौ उदकपदार्थस्य पदार्थान्तरेण साक्षात्सम्बन्धाभावात् लक्षणाया अत्रावधारितस्य कारणस्यासत्त्वात् प्रसिद्धार्थावगतिः न स्यात्। नैयायिकास्तावत् पदद्वयेऽपि लक्षणामङ्गीकुर्वन्ति परन्तु तन्न समीचीनम्, पदद्वयस्यापि लाक्षणिकत्वे बोधावृत्तिप्रसङ्गात्।

२२ क्यङ्मानिनोश्च पा.सू.६.३.३६ सन्दर्भे स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु

२३ चार्थे द्वन्द्वः

२४ निरादयः क्रान्ताद्यर्थे पञ्चम्या

२५ शाकपार्थिवादीनामुत्तरपदलोपस्योपसंख्यानम्

२६ भक्ष्येण मिश्रिकरणम् २.१.३५

२७ केशानां संघातः

२८ सुवर्णनिर्मितोऽलंकारः

२९ संख्ययाऽव्ययासपादूराधिकसंख्याः संख्येये २.२.२५

न चैकस्य तात्पर्यग्राहकत्वमिति वाच्यम्, विनिगमनाविरहेण लाक्षणिकस्य पदस्यावधारणस्यासम्भवात्। यद्यपि प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामित्येष नियमः प्रसिद्धः तथापि 'अनेकमन्यपदार्थे'[३०] इत्यनुशासनात् समस्तपदघटकपदादेवान्यपदार्थस्य प्रतीतौ बहुव्रीहिविधानं निष्फलमेव स्यात्। तस्मादेकार्थीभावोऽङ्गीकरणीयः, तदेव राजपुरुष इत्यत्र राज्ञः पुरुषः, राजा चासौ पुरुषः उभयथापि व्याख्याने भेदाभेदार्थस्यावगमनं समासत्वप्रयोज्यस्वरसामर्थ्ययात् कर्तव्यं भवति। त्वन्मते तु तन्न सम्भवि। समासत्वमुपजीव्य स्वरितत्वप्रतिज्ञानमेव तादृशार्थबोधे निमित्तम्, तथा च त्वया अपि रथन्तरं साम, वर्षासु रथकारो अग्निमादधीत इत्यादौ अतिरिक्तशक्तिकल्पनायाः स्वीकरणं सपारवश्यं करणीयमेव। तेनार्धजरतीयस्य अनौचित्यं मत्वा भवतापि समासशक्त्यङ्गीकारे प्रवृत्तिः विधेयेति।

तथा च मीमांसकमतेऽपि विशिष्टस्यैव शक्तिमत्त्वं वर्तते, वाक्ये तु स्वज्ञाप्यसम्बन्धो लक्षणा इत्यादिना लक्षणया व्यवस्था कृता वर्तते। तदेवं 'सर्वत्रैव हि वाक्यार्थः लक्षणयावसीयत इति। किञ्चाचार्यपतञ्जलेः 'कृत्तद्धितसमासाश्च'[३१] इति सूत्रीयं व्याख्यानम्, तत्र हि उक्तवान् भाष्यकारः 'समासग्रहणमर्थवत्समुदायानां नियमार्थम् इत्यादि। तत्र समासे शक्त्यनङ्गीकारे अर्थवत्वाभावात् पूर्वसूत्रेण प्रातिपदिकसंज्ञायाः अप्राप्तौ अस्य विधित्वं स्यात्। तेन भाष्यविरोधः स्पष्ट एव। किञ्च लक्षणावादिमते 'प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानाम् इत्यस्यानुकूल्यमपि भज्येत। तदेवं उपकुम्भम्, अर्धपिप्पली इत्यादौ दोषः स्यादेव। यदि च प्रकृतित्वाश्रये विभक्त्यर्थान्वयः तदा पंकजमानय, दण्डिनं पश्य इत्यत्रापि पङ्कदण्डयोः आनयनादिविषयता प्रसरेत। अयञ्च विषयः व्युत्पत्तिवादे 'पाकं पश्य इत्यस्मिन्नर्थे पचमानौ पश्य, क्रियागतद्वित्वमादाय प्राप्यते। क्रियायां संख्यान्वयस्तु हतशायिकाः पश्यन्ति इति भाष्याद्द्रवत्येव।

तदेवं विशिष्टशक्तिस्वीकारः करणीयः, तेन नीलोत्पलमित्यादौ अन्वयः प्रसिद्ध्यति, विविधाः नियमाः नाङ्गीकरणीयाः भवन्ति। अन्यच्च वषट्कर्तुः प्रथमभक्षः, त्र्यङ्गैः स्विष्टकृतं यजति इत्यादौ भक्षस्य न प्राथम्येन विधानम्, त्रित्वविधानस्य न युक्तत्वमेक-प्रसरताभङ्गापत्तेरित्यादिना उपपादितमपि। निषादस्थपतिन्यायस्य तु लाघवादनुगमः करणीयः। तदेव समस्तेषु वाक्येषु सन्देहस्य प्राग्भावः दृश्यते, अन्यथा लक्षणया अभीष्टार्थप्रतिपत्तौ सन्दिग्धार्थस्याभावात् व्याकरणाध्ययनप्रयोजनावसरे समासप्रयुक्तस्वरेण तस्य समाधानञ्चानुपादेयं स्यात्। तस्मादखण्डा शक्तिः, अखण्डं पदं वाक्यमित्यादिसर्वं वैयाकरणानामवधारितं निर्भ्रान्तमेव। बोधोपयोगि च सूत्रानुगुणञ्च ऋषिभिर्जुष्टञ्च वर्तते, तदेवास्य मतस्य वेदतुल्यता। उक्तमच तत्तुल्यं वेदशब्देन। तदध्ययनेन च पुण्यप्राप्तिः, लोकः श्रेयश्च विन्दति।

*****

---

३० पा.सू. २.२.२४

३१ पा.सू. १.२.४६

# समासे पृथक्शक्तिवादः

प्रो. सुबोधशर्मा
व्याकरणविभागाध्यक्षः
राष्ट्रियसंस्कृतसंस्थानम्, भोपालपरिसरः

कृतत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्चवृत्तयो भवन्ति। पञ्चानां 'वृत्तिः' इति पूर्वाचार्याणां संज्ञा इहाप्याश्रीयत इति भावः।[१क] एताः समासादिवृत्तयः पदविधिशब्देनोच्यते। पदसम्पदकविधित्वं पदविधित्वम्। पदविधिः समर्थो भवति। समासादिवृत्तयो हि विग्रहवाक्यार्थावबोधने क्षमो भवति। पदसम्बन्धी यो विधिर्भवति, स समर्थाश्रितो भवति। सामर्थ्ये सत्येव समासादिपदविधिर्भवति। तथा च सूत्रं- 'समर्थः पदविधिः'[१ख] सामर्थ्यं च द्विविधं भवति- व्यपेक्षारूपम् एकार्थीभावरूपं च। तत्र विशेषेण अपेक्षा = परस्पराकाङ्क्षा व्यपेक्षा, तथाहि- स्वार्थपर्यवसायिनां पदानाम् आकाङ्क्षादिवशाद् यः परस्परं सम्बन्धः, सा व्यपेक्षा कथ्यते।[२] प्रक्रियादशायां प्रत्येकमर्थवत्त्वेन पृथग्ग्रहीतानां पदानां समुदायशक्त्या विशिष्टैकार्थप्रतिपादकत्वम् एकार्थीभावलक्षणं सामर्थ्यं भवति। तत्र वैयाकरणानां मते वाक्ये व्यपेक्षासामर्थ्यं भवति, समासे च एकार्थीभावरूपं सामर्थ्यं भवति।

**नैयायिका** वाक्ये[३] समासे[४] वा शक्तिं न स्वीकुर्वन्ति। तत्रैकार्थीभावरूपं सामर्थ्यं न भवति। ते सर्वत्र व्यपेक्षारूपमेव सामर्थ्यं स्वीकुर्वन्ति। अत एते व्यपेक्षावादिनो भवन्ति। यथा 'राजपुरुषः' इत्यत्र राजपदं पुरुषम् आकाङ्क्षति, पुरुषपदं च राजानम् आकाङ्क्षति। अतः अनयोर्मध्ये परस्पराकाङ्क्षारूपाया व्यपेक्षायाः सत्त्वात् समासो भवति अकांक्षयैव च बोधो भवति। 'गृहं राज्ञः, पुरुषो देवदत्तस्य' इत्यत्र राजपदपुरुषपदयोः समासो न भवति, यतोहि अत्र राजपदं गृहम् आकाङ्क्षति, न तु पुरुषम्। एवञ्च नैयायिकानां मते शक्तं पदं भवति, पदसमुदायश्च वाक्यं भवति। यथा पदसमुदायः वाक्यं भवति तथैव पदार्थसमुदायः वाक्यार्थो भवति। अतः

१क. वै.सि.कौ.तत्त्वबो.पृ. १५९
१ख पा.सू २.१.१
२ वै.सि.कौ.तत्त्वबो.पृ.१५९
३ न्या.सि.मु.श.ख.पृ.३२७- 'वाक्ये तु शक्तेरभावात् शक्यसम्बन्धरूपा लक्षणापि नास्ति'।
४ न्या.सि.मु.श.ख.पृ.३३८- 'इत्थं समासे न क्वपि शक्तिः पदशक्त्यैव निर्वाहात्'।

पदसमुदाये समासे वाक्ये वा अवयव-शक्तिव्यतिरिक्ता काचित् समुदायशक्तिर्न भवति। यतोहि क्लृप्तया अवयवशक्त्यैव समासे यदि अर्थोपपत्तिः भवितुमर्हति, तर्हि समुदाये शक्त्यन्तरं किमर्थं कल्प्येत? अतः नैयायिकानां मते समासे पृथक् शक्तिः नास्ति। आकांक्षादिवशात् क्लृप्तया अवयवशक्त्यैव विशिष्टार्थबोधो जायते। यत्र च समुदायेन अवयवार्थातिरिक्तः कश्चन अर्थः प्रतीयते, तत्र लक्षणादिना सर्वं व्यवस्थाप्यते।

अपि च 'राज्ञः पुरुषः' इति वाक्यस्य योऽर्थः वर्तते, स एव 'राजपुरुष' इति समासस्यापि वर्तते। वृत्तिविग्रहवाक्ययोः समानार्थकत्वात्। वृत्त्यर्थावबोधकं वाक्यं हि विग्रहवाक्यं भवति। अतः विग्रहवाक्यार्थेनैवार्थवत्त्वात् समासे पृथक् शक्तिकल्पनाया आवश्यकतैव नास्ति।

ननु यथा पङ्कजादिपदेषु अवयवशक्तिर्न स्वीक्रियते, अपित्वयवातिरिक्ता समुदायशक्तिः सर्वैः स्वीक्रियते, तथैव राजपुरुषादौ समासे अपि अवयवातिरिक्ता समुदायशक्तिः स्वीक्रियतम्। अयं भावः- पङ्के जायत इति पङ्कजमिति पङ्कजशब्दस्य व्युत्पत्तिर्भवति। तदनुसारं पङ्कजशब्दस्य यौगिकार्थो भवति पङ्कजनिकर्ता। पङ्के यत् किमपि जायते उत्पद्यते वा तत्सर्वं मीनशैवाल-कमलादिकं पङ्कजं भवति । तथापि पङ्कजशब्देन पद्मत्वावच्छिन्नस्य पद्मस्यैव बोधो भवति, नतु मीनशैवालादिकस्य यौगिकार्थमात्रस्य । अतः पङ्क-ज इत्यनयोः समुदायरूपस्य पङ्कजशब्दस्य पद्मत्वावच्छिन्ने शक्तिः स्वीक्रियते। तेन समुदायशक्त्या पङ्कजपदेन पद्मत्वेन रूपेण पद्मस्य बोधः उपपद्यते। यथा पङ्कजशब्दे समुदायशक्तिः स्वीकृता तथैव 'राजपुरुष' इत्यादावपि कथं न स्वीक्रियते समुदायशक्तिरिति भावः।

अत्र नैयायिकाः समादधति- पङ्कजपदादौ ये जनाः अवयवार्थं न जानन्ति, तेषामपि पङ्कजशब्दश्रवणेन पद्मत्वप्रकारको बोधो भवति। यतः पङ्कज इति समुदायादवयवार्थानुसन्धानं विनैव पद्मत्वप्रकारकबोधो जायते, तस्मात् बोधजनकता शक्तिः समुदाये कल्प्यते। 'राजपुरुष' इत्यादिस्थले एवं नास्ति। अत्र यो हि 'राज' इत्यस्य 'पुरुष' इत्यस्य चैकैकस्यावयवस्यार्थं न 'जानाति' तस्य 'राजपुरुष' इति समुदायेनाप्यर्थावबधो न जायते। यः पुरुषोऽवयवार्थं जानाति, तस्य समुदायेनापि बोधो भवति। अतोऽत्रावयवातिरिक्तशक्तिकल्पना नोचितेति। इत्थं समासे वाक्ये वा व्यपेक्षैव सामर्थ्यं स्वीक्रियते।

तत्र प्राचीननैयायिकानां मते यः अर्थः 'राज्ञः पुरुषः' इत्यस्य वाक्यस्य वर्तते स एवार्थः 'राजपुरुषः' इति समुदायस्यापि वर्तते। यथा 'राज्ञः पुरुषः' इत्यत्र स्वत्वसम्बन्धेन राज्ञः पुरुषार्थेऽन्वयो भवति, तथैव 'राजपुरुषः' इति समासेऽपि भवति। राजपुरुषादौ पृथक् शक्तिः लक्षणा वा न स्वीक्रियते।

---

५ न्या.सि.मु.श.ख.पृ.-३२९- तत्पुरुषे पूर्वपदे लक्षणा.....तस्माद्राजपदादौ राजसम्बन्धिनि लक्षणा तस्य पुरुषेण सहाभेदान्वयः।

नव्यनैयायिकानां मते 'राजपुरुषः' इत्यत्र राजपदस्य सम्बन्धिनि लक्षणा क्रियते[५], तेन राजपदेन 'राजसम्बन्धी' इत्यर्थो लभ्यते। तस्य राजसम्बन्धिरूपस्य लक्ष्यार्थस्य पुरुषार्थे अभेदसम्बन्धेन अन्वयो भवति। ततश्च 'राजपुरुषः' इत्यनेन 'राजसम्बन्ध्यभिन्नः पुरुषः' इति बोधो जायते।

ननु अवयवार्थातिरिक्तः समुदायार्थः न स्वीक्रियते, तदा यथा 'ऋद्धस्य राजः पुरुषः' इति वाक्ये प्रत्येकं पदेन पृथक् पृथक् अर्थोपस्थितिर्भवति तथा च राजपदेन उपस्थापितेऽर्थे ऋद्धस्य विशेषणतयान्वयो भवति। तथैव राजपुरुष इत्यत्रापि राजपदेन पृथगर्थोपस्थितिसत्त्वात् तत्र ऋद्धस्येति विशेषणान्वयाभिप्रायेण ' ऋद्धस्य राजपुरुषः' इति प्रयोगः स्यादिति शङ्का, नचैतादृशः प्रयोगो भवति कुत्रापि। अतो व्यपेक्षावादिमते दोषो भवति। तत्र व्यपोक्षावादिभिः समाधानं क्रियते– 'सविशेषणानां वृत्तिर्न, वृत्तस्य च विशेषणयोगो न' इत्येकः न्यायो भवति। तदनुसारं 'राजपुरुष' इत्यत्र वृत्तौ राजपदार्थे अन्वयाभिप्रायेण 'ऋद्धस्य राजपुरुषः' इति प्रयोगो न भविष्यति। अपि च नव्यानां मते 'राजपुरुषः' इत्यत्र सम्बन्धिनि लक्षणा क्रियते। तत्पक्षे 'राजपदेन लक्षणया' राजसम्बन्धी इत्याकारकोऽर्थो भवति। अतः 'पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशेन' इति नियमेन राजरूपे पदार्थैकदेशे ऋद्धादिविशेषणपदार्थस्यान्वयो न भवति। अत्र पदार्थो वर्तते 'राजसम्बन्धी' इति। तत्र राजरूपार्थः पदार्थैकदेशो वर्तते। एतत्फलितार्थकथनपरम् एव 'सविशेषणानां वृत्तिर्न, वृत्तस्य च विशेषणयोगो न' इति। अतः विशेषणान्वयाभिप्रायेण 'ऋद्धस्य राजपुरुषः' इत्येतादृशप्रयोगो न प्राप्नोति।

किञ्च यदा समासे अवयवार्थः स्वीक्रियते तदैव समासलक्षणमपि संगतं भवति। तथाहि प्रोच्यते– प्रायेण पूर्वपदार्थप्रधानः अव्ययीभावः, प्रायेण उत्तरपदार्थप्रधानः तत्पुरुषः, प्रायेण अन्यपदार्थप्रधानो बहुव्रीहिः, प्रायेण उभयपदार्थप्रधानो द्वन्द्वः इति। यदि समासे विशिष्टार्थः एव स्वीक्रियते, एकैकः अवयवपदार्थः न स्वीक्रियते, तदा 'उपकृष्णम्, राजपुरुष' इत्यादौ समुदाय एव अर्थवान् भविष्यति, न तु एकैकः अवयवः। तथा सति 'पूर्वपदार्थप्रधानः' इत्यादिरूपं लक्षणं कथं संगच्छेत ? अतः समासे शक्तिः पृथक् शक्तिर्नास्तीति।

अत्राहुर्वैयाकरणाः– यदि समासे अतिरिक्तशक्तिः न स्वीक्रियेत तदा अनेके दोषा भवन्ति। तद्यथा– 'निष्कौशाम्बिः' इत्यस्य अर्थो भवति– निष्क्रान्तः कौशाम्ब्याः इति, एवमेव गोरथः इत्यस्य गोयुक्तो रथः, 'घृतघटः' इत्यस्य घृतपूर्णः घटः, 'गुडधाना' इत्यस्य गुडेन मिश्रा धानाः, 'केशचूडः' इत्यस्य केशसंघातभूता चूडा यस्य सः', 'सुवर्णालङ्कारः' इत्यस्य 'सुवर्णस्य विकारः अलंकारः', 'घनश्यामः' इत्यस्य घन इव श्यामः, 'हंसगमनः' इत्यस्य हंसस्य गमनमिव गमनं यस्य सः, इत्येवं क्रमेण अर्थाः भवन्ति। यदि समासे शक्तिः न स्वीक्रियते तदा वाक्ये निष्क्रान्त–युक्त–पूर्ण–मिश्र–संघात–विकार–सादृश्यादिरूपार्थलाभाय यथा वाक्ये निष्क्रान्त–युक्त– पूर्ण–

मिश्र-संघात-विकार-इवादिशब्दानां प्रयोगः क्रियते, तथैव समासेऽपि एतेषां शब्दानां प्रयोगः स्यात्। अन्यथा एतेषां शब्दानां समासे प्रयोगाभावात् तेऽर्था अपि न प्रतीयेरन्। यदि च समासे शक्तिः स्वीक्रियते, तदा तु तादृशार्थानां समासशक्त्यैव लाभ इति तदर्थं समासे एतेषां प्रयोगस्य आवश्यकतैव न भविष्यति। अतो लाघवात् समासे शक्तिः स्वीकार्येति। तदुक्तं-

**बहूनां वृत्तिधर्माणां वचनैरेव साधने।**
**स्यान्महद् गौरवं तस्मादेकार्थीभावः आश्रितः।।**[६क]

पुनरत्र व्यपेक्षावादिभिः नैयायिकैः उच्यते- निष्क्रान्तयुक्तपूर्णादिरूपा येऽपि अर्थाः सन्ति, लक्षणया तेषां बोध उपपादयितुं शक्यते। तेषु अर्थेषु समासस्य शक्तिकल्पनाया आवश्यकता नास्ति, न वा तद्वाचकक्रान्तयुक्तादिशब्दानां प्रयोगस्य आवश्यता अस्ति।

इत्थं नैयायिकाः तत्पुरुषे पूर्वपदे, बहुव्रीहौ पर्यायेण पदद्वये उत्तरपदे वा लक्षणा, इतरेतरद्वन्द्वे 'धवखदिरौ' इत्यादौ साहित्यरूपे अर्थे, समाहारद्वन्द्वे समाहाररूपे अर्थे, 'उपकुम्भम्' इत्यादौ सामीप्यादिरूपे अर्थे च लक्षणां कुर्वन्ति। कर्मधारयस्थले पदाभ्यां पदार्थयोः, संसर्गतया अभेदस्य च लाभात् प्रायः 'नीलोत्पलम्' इत्यादौ लक्षणा न। 'पुरुषव्याघ्रः' इत्यादौ तु कर्मधारयेऽपि उत्तरपदस्य व्याघ्रसदृशाद्यर्थे लक्षणा क्रियते एव। इत्थं यत्र कुत्रपि समासेन अवयवातिरिक्तः कश्चन अर्थः प्रतीयते तत्र यथालाघवं पूर्वपदस्य उत्तरपदस्य, पर्यायेण पूर्वोत्तरपदयोः अन्यतरस्य वा तत्तदर्थे लक्षणां कृत्वा व्यवस्था क्रियते। यत्र पूर्वोत्तरयोः अन्यतरस्य लक्षणा क्रियते, तत्र अवशिष्टं पदं तात्पर्यग्राहकं भवति। अतः समासे शक्तिः एतेषां मते नैव भवति। समासे शक्त्यस्वीकारे येऽपि दोषा आपतन्ति, तेषां शास्त्रव्युत्पत्त्यनुसारं समाधानं च कुर्वन्ति ते।

समासशक्तिविषये मीमांसाकेषु मतभेदो भवति, तथापि प्रायः मीमांसका व्यपेक्षावादिन एव भवन्ति।[६ख] सर्वत्र समासे शक्तिं न स्वीकुर्वन्ति। तथाहि-

केचन मीमांसकाः मन्यन्ते यत् 'सर्वत्र यौगिकैः शब्दैः द्रव्यमेवाभिधीयते'[७] इति वाक्यानुरोधात् अरुणाधिकरणाद्यनुरोधात् च सर्वेषां कृदन्त-तद्धितान्त-समासरूपाणां यौगिकशब्दानां द्रव्ये शक्तिः एव भवति, न तु अवयवशक्त्या निर्वाहः सम्भवतीति। अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इत्यत्र पिङ्गाक्षीशब्दस्य एकहायनीशब्दस्य च द्रव्यवाचकत्वं स्वीकृतं वर्तते । पिङ्गाक्ष्यादिशब्दे बहुव्रीहिः समासो वर्तते यस्य विग्रहो भवति- 'पिङ्गे अक्षिणी यस्याः सा पिङ्गाक्षी गौः' इति। अत्र अवयवशक्त्या द्रव्यवाचकत्वं न सम्भवति, अपितु समुदायशक्त्या एव इति । एतेषां मते समासस्य विशिष्टार्थवाचकत्वं वर्तते।

६क वै.भू.सा. करिका- ३३

६ख यत्तु व्यपेक्षावादिनो नैयायिकमीमांसकादयः। वै.भू.सा. समासशक्तिनिर्णये।

७ सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते। न हि संबन्धवाच्यत्वं संभवत्यतिगौरवात्॥ अरुणाधिकरणम् तन्त्रवार्तिकम्।

अन्ये मीमांसाकास्तु सर्वत्र यौगिकै: शब्दै: द्रव्यमेवाभिधीयते' इति वचनम् अनिर्ज्ञातशक्तियौगिकपरम् इत्यामनन्ति। तथा च यौगिकशब्देषु केषाञ्चिच्छब्दानां द्रव्यवाचकत्वेऽपि समासे सर्वत्र शक्तिं न स्वीकुर्वन्ति। पिङ्गाक्ष्यादौ गुणवाचकपदे बहुव्रीहि: वर्तते, गुणश्च द्रव्यं विना स्थातुं न शक्नोति, अत: द्रव्याविनाभूतगुणवाचकपदबहुव्रीहे: द्रव्यवाचकत्वेऽपि सर्वत्र बहुव्रीहौ अन्यसमासेषु वा शक्तिर्नास्त्येव इति एतेषां सिद्धान्ताशय:। केचन मीमांसका: समासे विग्रहवाक्यस्मरणपूर्वकमर्थबोधकत्वं भवति, न तु साक्षात् इति स्वीकुर्वन्ति। अत एव 'रामेश्वर:' इत्यादौ क: समास: इति प्रश्ने विग्रहवाक्यप्रदर्शनमुखेन निर्णय: क्रियते इति।

यथा वा– लक्षणया निर्वाहे रथकाराधिकरणविरोधपरिहराय मीमांसका: समुदायशक्तिम् अङ्गीकुर्वन्ति। तथाहि– वर्षाषु ''रथकारोऽग्निमादधीत'' इत्यत्र लक्षणां विना कल्पितयाऽवयवशक्त्यैव ब्राह्मणादीनां ग्रहणेनैव वाक्यार्थसङ्गति: स्यात्। किन्तु ''रूढिर्योगाद् वलीयसी'' इति नियमेन रथकारपदे रूढिशक्ते: कल्पनं कृत्वा शूद्रजातिविशेषस्य ग्रहणं कृतमस्ति। तेन शूद्रेऽपि वेदाध्ययनाधिकारित्वमागच्छति।

'रथकारोऽग्निमादधीत' इत्यत्र रथकारपदे मीमांसका: समुदायशक्तिम् अङ्गीकुर्वन्ति । ते समुदायशक्त्या रथकारपदेन शूद्रजातिविशेषस्य ग्रहणं कुर्वन्ति। तत्र रथकारपदेन शूद्रस्य ग्रहणं ब्राह्मणादीनां वा ग्रहणमिति जिज्ञासाशान्त्यर्थं पूर्वपक्षरूपं समाधानमेवमुक्तं यत् यदि रथकारपदेन शूद्रजातिविशेषस्य ग्रहणं स्यात्तर्हि अग्न्याधानसंस्कार उपपन्नो न भवति। यतो हि स्त्रीणां शूद्राणाञ्च वेदाध्ययनाधिकारित्वं नास्ति। अत: ब्राह्मणादीनां ग्रहणं कर्तव्यम् । आपत्काले विहितकर्मभिन्नकर्मानुष्ठानेऽपि दोषाभावात्। एतदनन्तरं मीमांसाकारेण सिद्धान्तसमाधानमेवं कल्पितं यत् 'रूढिर्योगाद् बलीयसी' इति न्यायेन रथकारपदेन रूढिशक्त्या शूद्रस्यैव ग्रहणं कर्तव्यम्। अपूर्वं शूद्रवेदाध्ययनकल्पनं च कृतम्। लक्षणया योगशक्त्या वा ब्राह्मणस्य ग्रहणेन तद्वाक्यस्य अर्थे सम्भवत्यपि अपूर्वशूद्रवेदविद्याकल्पनेन सुस्पष्टं यत् रथकारपदे मीमांसका: समुदायशक्तिमेवा अङ्गीकुर्वन्ति ।

अतो यत्रावयवशक्तिस्वीकारे अधिकरणविरोध: तत्र एकहायन्यादिसमस्ते विशिष्टशक्ति: स्वीक्रियते, अन्यत्र सामान्येन अवयवशक्त्या एव निर्वाहो भवति इति।

नव्यमीमांसकानां मतेऽपि समासे शक्ति: नैव स्वीक्रियते। अपितु अवयवशक्त्या एव निर्वाह: क्रियते। यत्र अवयवातिरिक्त: कश्चन विशिष्टार्थ: प्रतीयते, तत्र लक्षणादिना उपपत्ति: क्रियते। तत्र तत्पुरुषे पूर्वपदे लक्षणा क्रियते। बहुव्रीहौ पदद्वयेऽपि लक्षणा क्रियते। केचन एकस्मिन् एव पदे लक्षणां स्वीकुर्वन्ति, अपरस्य च तात्पर्यग्राहकत्वं कल्पयन्ति। द्वन्द्वे च पदद्वयेऽपि लक्षणा स्वीक्रियते। तत्र इतरेतरद्वन्द्वस्थले साहित्ये, समाहारद्वन्द्वस्थले समाहारार्थे च लक्षणेति। इत्थं मीमांसकानां परस्परमपि अस्मिन् विषये वर्तते किञ्चिन्मतभेद:। तथापि काँश्चित् अपवादभूतान्

मीमांसकान् विहाय अन्यै: सर्वैरपि समासे विशिष्टे शक्ति: अप्रामाणिकी एवेति स्वीक्रियते। अत: एतेषां मतेऽपि नैयायिकवत् क्लृप्तया अवयवशक्त्या एव निर्वाहे सर्वत्र समासे शक्ति: नाङ्गीक्रियते इति निष्कर्ष:।

**अत्र वैयाकरणसिद्धान्त:-**

वैयाकरणा: समासादिवृत्तौ अवयवशक्त्यतिरिक्तां समुदायशक्तिं स्वीकुर्वन्ति। एतेषां मतानुसारं यथा 'घट:,पट:' इत्यादौ घकारादिवर्णसमुदायरूपो घटादिशब्दोऽर्थवान्, घटादिशब्दघटक: एकैकवर्णोऽनर्थक:। पदघटकानां वर्णानामनर्थकत्वमेव, तथैव वृत्तवपि समुदायस्यैवार्थवत्त्वम्, वृत्तिघटकानि पदानि अनर्थकानि ।इत्थं 'राजपुरुष' इत्यादौ समासशक्त्या एव राजविशिष्टपुरुषस्य भानसम्भवे राजपुरुषपदयोरपि पुनस्तद्बोधकत्वकल्पना वृथैव। यथा- 'वृष:, याव:' इत्यादे: योऽर्थ: वर्तते, स एवार्थ:'वृषभ:, यावक:' इत्यादे: वर्तते, किन्तु वृषभशब्दघटकस्य 'वृष' इत्यस्य यावकशब्दघटकस्य 'याव' इत्यस्य च कश्चनार्थो न वर्तते। स्वतन्त्र: वृषादिशब्द: अर्थवान्, वृषभशब्दोऽप्यर्थवान्, किन्तु वृषभादिशब्दे विद्यमान: वृषादिशब्दोऽनर्थक:। समुदायो हि अर्थवान्, तस्यैकदेशोऽनर्थक: इति। तथैव वाक्ये 'राजा' इत्यपि अर्थवान् वर्तते, पुरुषशब्दोऽपि अर्थवान् वर्तते, किन्तु 'राजपुरुष:' इत्यादिवृत्तौ विद्यमान: राजशब्द: पुरुषशब्दो वा अर्थवान्नास्ति। अपितु 'राजपुरुष' इति समुदाय एव अर्थवान् वर्तते। अत: समुदाये शक्ति: आवश्यकी। अन्यथा यथा 'ऋद्धस्य राज्ञ: पुरुष:' इत्यादौ वाक्ये राजाद्यर्थस्य स्वतन्त्रोपस्थितिसत्त्वात् तत्र विशेषणलिङ्गसंख्यादीनामन्वयो भवति, तथैव 'राजपुरुष' इत्यादवपि घटकेन राजादिपदेन स्वातन्त्र्येण अर्थोपस्थितिसत्त्वात् तत्र विशेषणाद्यन्वय: स्यात्। अपि च यदा वाक्ये समासे वा सर्वत्र व्यपेक्षारूपमेव सामर्थ्यं स्वीकरिष्यते, तथा च तादृशसामर्थ्ये समासविधानं स्वीकरिष्यते, तदा सर्वत्र समास एव स्यात्, वाक्यं कुत्रापि न स्यात्। अर्थात् समासो वाक्यस्य नित्यं निवर्तको भवेत्। किन्तु विकल्पेन वाक्यमपि इष्यते समासोऽपि। अत: एतदर्थं व्यपेक्षापक्षे 'विभाषा'[८] इति सूत्रम् आवश्यकम्।

शाब्दिकानां मते तु व्यपेक्षारूपं सामर्थ्यं यदा विवक्षितं भवति तदा 'राज्ञ:पुरुष:' इत्यादिवाक्यं भवति, यदा च एकार्थीभावरूपसामर्थ्यस्य विवक्षा भवति तदा 'राजपुरुष' इति समासो भवति। अत: अस्मिन् पक्षे **विभाषा**[९] इति सूत्रस्य आवश्यकता न भवतीति लाघवमस्ति। पाणिनिस्तुलक्षणैकचक्षुष्कान् मन्दान् प्रतिक्वैकार्थीभावोनित्य: क्व पाक्षिक: क्व नास्त्येवेत्यर्थबोधनार्थं सूत्रं स्वीकृतवान्।[१०]

अपि च एकार्थीभावपक्षे 'राजपुरुष:' इत्यत्र समुदायशक्त्या राजविशिष्टपुरुषार्थस्य

८ पा.सू.२.१.११
९ पा.सू.२.१.११
१० ल.श.शे. पा.सू.२.१.११

उपस्थितिः भवति। अत्र राजरूपार्थः पदार्थैकदेशो वर्तते, अतः पदार्थः पदार्थेनान्वेति न्यायानुरोधात् तत्र विशेषणाद्यन्वयो न भवति। तेन 'ऋद्धस्य राजपुरुषः' इत्यादेः प्रयोगस्य प्राप्तिर्न भवति। व्यपेक्षापक्षे तु प्राप्तिः स्यादेव। ननु व्यपेक्षापक्षेऽपि 'सविशेषणानां वृत्तिर्न वृत्तस्य च विशेषणयोगो न' इति वार्तिकानुसारम् 'ऋद्धस्य राजपुरुषः' इति प्रयोगो न प्राप्नोतीति कथं दोषः? वार्तिकादिस्वीकारे गौरवात्। अत एव भाष्यकारेण **समर्थः पदविधिः**[११] इत्यस्मिन् सूत्रे व्यपेक्षापक्षम् उद्भाव्य 'अथैवैतस्मिन् व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेषः स वक्तव्यः'[१२] इति दूषणम् अपि उक्तम्। अतः समासादिवृत्तिषु एकार्थीभावरूपं सामर्थ्यं स्वीकार्यम्।

किञ्च यथा सर्वैः व्यपेक्षावादिभिः अपि पङ्कजादिपदेषु अवयवशक्तिव्यतिरिक्ता समुदायशक्तिः स्वीकृता वर्तते, तथैव समासादिवृत्तिषु अपि अवयवशक्त्यतिरिक्तसमुदायशक्तिः स्वीकर्तव्या। तदुक्तं वैयाकरणभूषणसारकरिकायाम्-

**समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्।**[१३] इति।

अर्थात् पङ्कजशब्दवत् समासेऽपि भिन्नैव शक्तिः स्वीकर्तव्या। तत्र हि नैयायिकैः:अवयवशक्त्या पङ्कजनिकर्तृत्वरूपार्थं बोधयति, समुदायशक्त्या पद्मत्वेन रूपेण पद्मं बोधयतीति स्वक्रियते।[१४क] यद्युच्येत- पद्मत्वेन रूपेण पद्मस्य बोधाय पङ्कजशब्दे शक्तिः स्वीक्रियते इति, तदा स्वामित्वेन स्वाम्यर्थलाभाय चित्रग्वादिसमासेऽपि शक्तिः स्वीक्रियताम्। यदि उच्येत यत् चित्रग्वादिसमासे लक्षणया स्वाम्यर्थलाभो भवितुमर्हति तर्हि पङ्कजादिपदेऽपि लक्षणया पद्मबोधो भवितुमर्हति, कथं तत्र शक्तिः स्वीक्रियते? इति। यदि उच्येत- पङ्कजपदे अवयवार्थं ये न जानन्ति तेषामपि समुदायात् पङ्कजशब्दादेव पद्मत्वेन रूपेण पद्मबोधो भवति, अतस्तत्र शक्तिः कल्प्यत इति, तदा- समासादिवृत्तावप्यवयवार्थविग्रहसमासाद्यजानतामपि जनानाम् समुदायादेव बोधो दृश्यते, अतोऽत्रापि शक्तिः स्वीकार्यैव।

अपि च समासे शक्त्यस्वीकारे अनेके दोषा आपतन्ति पूर्वोक्तम्। तद्यथा- 'घनश्यामः' 'धवखदिरौ', निष्कौशाम्बिः', 'गोरथः', 'घृतघटः, 'गुडधानाः', 'केशचूडः', 'सुवर्णाल१कारः', 'द्विदशाः', 'सप्तपर्णाः' 'इत्यादौ घन इव श्यामः, धवश्च खदिरश्च, कौशाम्ब्या निष्क्रान्तः, गोयुक्तो रथः, घृतपूर्णो घटः, गुडेन मिश्रा धानाः, केशानां संघातभूता चूडा यस्य, सुवर्णविकारः अलङ्कारः, द्विरावृत्ता दश, सप्त सप्त पर्णानि यस्य' इत्यादिरूपा अर्थाः प्रतीयन्ते। अत्र व्यपेक्षापक्षे यथा वाक्येषु प्रतीयमानानां सादृश्य-चकारार्थसमुच्चय-निष्क्रान्त-युक्तप्रभृतीनाम् अर्थानां वाचकाः

११ पा.सू.२.१.११
१२ म.भा. पा.सू.२.१.११
१३ वै.भू.सा.का.३२, समासशक्तिप्र.
१४क न्या.सि.मु.श.ख.

इवादिशब्दाः प्रयुक्ताः सन्ति, तथैव सादृश्याद्यर्थस्य उपपत्त्यर्थं समासेऽपि तद्वाचकानां इव चकारादिशब्दानां प्रयोगः प्राप्नोति, तन्निषेधार्थं वचनं कर्तव्यं भविष्यतीति महद् गौरवं स्यात्। एकार्थीभाववादिमते तु प्रतीयमानेषु सादृश्याद्यर्थेषु धनश्यामप्रभृतीनां समस्तपदानां शक्तिरेव वर्वते समासशक्त्यैवोक्तार्थलाभो भवति । तत्र इवादिशब्दानां प्रयोगस्य प्राप्तिरेव नेति महल्लाघवम्।[१४ख]

किञ्च 'चित्रगु' इत्यादिसमासेषु चित्रशब्दस्य चित्ररूपार्थो भवति, गोशब्दस्य च गोरूपार्थः। स्वामिरूपोऽर्थः कस्यापि पदस्य नास्ति, तथापि चित्रगु इत्यादिपदेन स्वाम्याद्यर्थस्य प्रतीतिर्जाते। अतः चित्रगु इत्यादिसमासे अवयवातिरिक्ता समुदायशक्तिः स्वीकर्तव्येति। अत्र लक्षणया स्वाम्याद्यर्थप्रतीतिरित्यपि वक्तुं न शक्यते, यतोहि अत्र लक्षणा भवितुं न शक्नोति। तथाहि यदि चित्रपदस्य स्वाम्याद्यर्थे लक्षणा क्रियते तदा चित्रगुशब्दार्थो भविष्यति 'चित्रस्वामी गौः' इति, यदि च गोपदस्य लक्षणा करिष्यते तदा गोपदेन गोस्वामिरूपार्थस्योपस्थितिः, तेन गोस्वामी चित्राः इत्याकारकोऽर्थः स्यात्। यतोहि चित्रपदस्य गोपदस्य वा स्वामिनि लक्षणा करिष्यते तदा चित्रस्वामिरूपः गोस्वामिरूपो वा पदार्थो भविष्यति। तत्र चित्रार्थस्य गोरूपार्थस्य वा पदार्थैकदेशत्वात् परस्परमन्वयो भवितुं नार्हति, अपितु चित्रार्थस्य गोस्वामिनि अथवा गोरूपार्थस्य चित्रस्वामिनि अन्वयः प्राप्नोति। यदि च शक्त्या उपस्थाप्ययोः चित्रार्थगवार्थयोः पूर्वं चित्राभिन्ना गौः इति अन्वयबोधं कृत्वा ततः लक्षणा क्रियते, तदपि युक्तं न। यतोहि गोपदस्य लक्षणा करिष्यते चित्रपदस्य वा इत्यत्र काचिद् विनिगमना नास्ति। अतः विनिगमनाविरहात् एवमपि लक्षणा कर्तुं न शक्यते। यदि पदद्वयेऽपि लक्षणा स्वीक्रियते तदा बोधावृत्तिप्रसङ्गः। यदि च पदद्वये युगपद् लक्षणाम् अकृत्वा एकस्य पदस्य लक्षणा अपरस्य च तात्पर्यग्राहकत्वमिति मन्यते, तदाऽपि कस्य पदस्य लक्षणा कस्य पदस्य च तात्पर्यग्राहकत्वमित्यत्र विनिगमना विरहाद्दोषः तदवस्थः एव। यदि च मन्यते यत् गोपदस्य लक्षणायां साक्षात् सम्बन्ध एव विनिगमकः इति, यतोहि चित्रार्थस्य गुणत्वात् गोद्वारा स्वामिनि अन्वयः, किन्तु गोः स्वामिना सह साक्षात् सम्बन्धो वर्तते इति, तदपि न, यतोहि कथञ्चिद् अत्र लक्षणास्वीकारेऽपि 'प्राप्तोदकः कृतविश्वः उपहतपशुः उद्धृतौदना, बहुपाचिका इत्यादावषष्ठ्यर्थवहुब्रीहौ लक्षणा कर्तुं न शक्यते। 'प्राप्तम् उदकं यम् स प्राप्तोदको ग्रामः' इत्यत्र वाक्येन 'यत्कर्मकप्राप्तिकर्त्रभिन्नम् उदकम्' इति बोधो भवति, समासेन च उदककर्तृकप्राप्तिकर्म ग्रामः इति बोधो भवति। एष समासेन प्रतीयमानः अर्थः लक्षणया प्राप्तुं न शक्यते। एवमेव 'कृतं विश्वं येन स कृतविश्वः' इत्यत्र विग्रहवाक्येन 'यत्कर्तृककृतिकर्माभिन्नं विश्वम्' इति बोधो जायते, समासेन तु विश्वकर्मककृतिकर्ता इति बोधो जायते। उपहृतः पशुः यस्मै स उपहतपशुः इत्यत्र वाक्येन यदुद्देश्यकोपहरणकर्मीभूतः पशुः इति बोधो जायते, समासेन च पशुकर्मकोपहरणोद्देश्यः इति बोधो जायते। उद्धृतः ओदनः यस्याः सा उद्धृतौदना स्थाली इत्यत्र यदवधिकोद्धरणकर्माभिन्नौदनः इति वाक्येन बोधो भवति, समासेन च

१४ख वै.भू.सा.कारिका ३३

ओदनकर्मकोद्धरणावधिः इति बोधो भवति। बहवः पाचका यस्यां सा बहुपाचिका नगरी इत्यत्र विग्रहवाक्येन यदधिकरणकबह्वभिन्नपचनकर्तारः इति बोधो भवति, समासेन च बहुपाककर्त्रधिकरणम् इति बोधो भवति। एते अर्थाः लक्षणया लब्धुं नार्हन्ति। वैयाकरणानां मते तु यथा घटत्वविशिष्टे घटपदस्य शक्तिः भवति तथैव उदककर्तृकप्राप्तिकर्मत्वविशिष्टे 'प्राप्तोदक' इति समुदायस्य शक्तिः, विश्वकर्मककृतिकर्तृत्वविशिष्टे कृतविश्वपदस्य शक्तिः, पशुकर्मकोपहरणोद्देश्यत्वविशिष्टे उपहतपशुपदस्य शक्तिः, ओदनकर्मकोद्धरणावधित्वविशिष्टे उद्धृतौदनापदस्य शक्तिः, बहुपाककर्त्रधिकरणत्वविशिष्टे बहुपाचिकापदस्य शक्तिः इति समुदायशक्त्या एव तेषामपि निर्वाहो भवति।[१५]

नन्ववयवार्थास्वीकारे प्रायेण पूर्वपदार्थप्रधानः अव्ययीभावः, प्रायेणोत्तरपदार्थ- प्रधानः तत्पुरुषः, इत्यादिसमासलक्षणं कथं संगच्छेत ? इति। अत्र एकार्थीभाववादिभिः समाधानं क्रियते- रेखागवयादिनिष्ठलाङ्गूलादेर्वास्तवपश्वलक्षणत्ववदेतेषामपि न समासलक्षणत्वम्। बोधकता तु तद्वदेव स्यादिति। अर्थात् यथा रेखागवयादिषु=चित्रस्थगवयादिषु दृश्यमानं शृङ्गलाङ्गूलादिकं वास्तवस्य पशोः लक्षणं नास्ति, यतोहि वास्तवपशोः शृङ्गादिकं वास्तवपशोः एव भविष्यति, न तु चित्रे। तथापि अवास्तवपशौ विद्यमानमपि शृङ्गादिकं वास्तवपशोः बोधकं भवति, तथैव विग्रहवाक्यनिष्ठपूर्वपदार्थप्राधान्यादिकं समासे अविद्यमानमपि समासस्य बोधकं भवति। वस्तुतः 'पूर्वपदार्थ- प्रधानः' इत्यादिरूपं लक्षणं समासस्य नास्ति।

अपि च समासे शक्त्यस्वीकारे 'चित्रगुमानय' इत्यादौ कर्मत्वाद्यनन्वयापत्तिः भवति, यतोहि प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानाम्, इति नियमानुसारेण प्रकृत्यर्थेन प्रत्ययार्थस्य अन्वयः आवश्यकः। यतः प्रत्ययविधानं सा प्रकृतिः। अत्र अम्विधानं 'चित्रगु' इति समुदायाद् वर्तते, अतः प्रकृतिः 'चित्रगु' इति समुदायः। यदि चित्रगुरूपप्रकृतेः कश्चन अर्थो न स्वीक्रियेत तदा प्रकृत्यर्थत्वाभात् अम्प्रत्ययार्थकर्मत्वादेः अन्वयः कथं सम्पत्स्यते ? एवमेव यदा समासे शक्तिः न स्वीक्रियेत तदा 'राजपुरुषः' 'नीलोत्पलम्' इत्यादौ सर्वत्र अनन्वयप्रसङ्गादिरूपा अनेके अपरेऽपि दोषा आपतन्ति, तेषां परिहाराय अनेकाः क्लिष्टकल्पनाः करणीया भवन्ति। तस्मात् समासे पृथक् शक्तिः स्वीकरणीयैव।

किञ्च यदि समासे शक्तिः न स्वीक्रियेत तदा अर्थवत्त्वाभावात् राजपुरुषादिसमस्तपदस्य प्रातिपदिकसंज्ञादिकं भवितुं न शक्नोति। यतोहि अर्थवतः शब्दसमुदायस्यैव प्रातिपदिकत्वादिकसंज्ञाभवति।[१६] कृत्तद्धितेत्यत्रापि अर्थवदित्यनुवृत्तेः। लाक्षणिकम् अर्थम् आदायापि समासस्य प्रातिपदिकत्वं विधातुं न शक्यते, यतोहि यदि शक्तिरेव नास्ति, तदा शक्यसम्बन्धरूपा लक्षणा कथं सम्भाव्येत ? अतः समासे शक्तिः स्वीकरणीया। अवयवशक्त्या निर्वाहः कथमपि भवितुं नार्हति। इत्येष शाब्दिकानां समासशक्तिविषयकः सिद्धान्तः बोध्यः। अधिकं तु वैयाकरणभूषणसारमञ्जूषादितो ज्ञेय इत्यलं विस्तरेण।

१५ वै.भू.सा.कारिका ३४

१६ पा.सू.१.२.४५

# समासे शक्तिसाधकं तत्त्वम्

डॉ. प्रदीप कुमार पाण्डेयः

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भाषते।।[1]**

इति वाक्यपदीयोक्तसिद्धान्तरीत्या सर्वमपि ज्ञानं शब्दजन्यम्। स च शब्दः व्यक्तः स्यात्, अव्यक्तो वा स्यात् सांकेतिको वा भवेदित्यन्या कथा। परञ्च वैय्याकरणनिकाये ज्ञानकारणं शब्द एव। तत्र नाना विधेषु व्यक्तशब्देषु सामासिकोऽप्येकः शब्दो भवति। यथा राजपुरुषः। राजपुरुषः इति सामासिकशब्दस्य प्रयोक्तुरयमेवाभिप्रायो यत् यः पुरुषो राज्ञा सह सम्बन्धत्वं भजति तस्यैव लोकव्यवहारे बोधो भवेत्। किन्तु राजपुरुष इति सामासिकः शब्दो लौकिकार्थबोधे द्विधा स्थितिं भजति। स्वत्वसम्बन्धेन राजविशिष्टः पुरुष इत्येका स्थितिः। राजनिरूपितस्वत्वान् पुरुषः, इति द्वितीया स्थितिः। अभिप्राय एक एव यत् राजसम्बन्धी पुरुष इति। अभिप्रायस्यैकत्वे तात्पर्यस्य समानेऽपि केचन समासे अभिधारूपां शक्तिं स्वीकुर्वन्ति, केचन नाङ्गीकुर्वन्ति। अयमेवात्र विचारणीयो यत् सम्बन्धवैलक्षण्येऽपि बोधे, वक्तृतात्पर्ये वा वैलक्षण्याभावे किमर्थं राज्ञः पुरुषः इति पदसमुदाये या बोधजनकता सा राजपुरुषः इति समुदाये नास्तीति भेदः स्वीक्रियते। नामसमुदायात्मकस्य पदस्य नामानतिरिक्तत्वादिति विचारणायामत्रमुच्यते यत्— नामसमुदायात्मके समासरूपे पदे अवयवातिरिक्ता बोधजनकता अस्ति नवेति विषये नैय्यायिकेषु प्राच्यनव्ययोः, मीमांसकानां वैय्याकरणानाञ्च व्युत्पत्तिभेदात् भेदः। तत्रादौ वैय्याकरणेषु वैय्याकरणभूषणसारकारस्य श्री कौण्डभट्टस्य मतं यथामत्युपस्थापयामि। श्री कौण्डभट्टः अमुं विषयं कारिकात्रयेणोपस्थापितवान्। ताः कारिकाः सन्ति–

**जहत्स्वार्थाजहत्स्वार्थे द्वे वृत्ती ते पुनस्त्रिधा।**
**भेदसंसर्ग उभयं चेति वाच्यव्यवस्थितेः।।**
**समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत् ।**
**बहूनां वृत्तिधर्माणां वचनैरेव साधने।**
**स्यानमहद् गौरवं तस्मादेकार्थीभाव आश्रितः।।[2]**

---

१ वा.प.१.१३१

२ वै.भू.सा.स.शक्ति. कारिकासंख्या-३१,३२,३३

अयं भावः- समासे जहत्स्वार्थाऽजहत्स्वार्थेति नामके द्वे वृत्ती भवतः। तत्र यस्यां वृत्तौ पदानि स्वार्थं जहति सा जहत्स्वार्था। अर्थात् यथा वर्णसमुदायात्मके पदे वर्णाः अर्थशून्याः भवन्ति तथा नामसमुदायात्मके समासे पदान्यर्थशून्यानि भवन्ति। एवञ्च समासे जहत्स्वार्थावृत्तिपक्षे, एकार्थीभावः। न च समासे वृत्तिद्वयं प्रकल्प्य जहत्स्वार्थावृत्तिरेवैकार्थीभावे परिवर्तितो भवतीति कल्पनायां किमपि प्रमाणमस्तीति वाच्यम्, वैय्याकरणनये समासे एकार्थीभावात्मिका शक्तिः भवतीत्यत्र प्रमाणमस्ति 'समर्थः पदविधिः'[3] इति सूत्रभाष्यम्। एतत्सूत्रे भाष्यकारेण विचारितं यत् ''किं पुनः समर्थन्नाम इति''[4] एतज्जिज्ञासाजनकशब्दप्रयोगानन्तरमुत्तरितं यत् ''पृथगार्थानामेकार्थीभावः समर्थवचनम्[5]''। ''पृथगार्थानामेकार्थीभावः समर्थवचनम्'' इति समाधानभाष्ये पृथगर्थः, एकार्थवत्त्वञ्चेति पदद्वयमागतम्, अतः पुनः शङ्का कृता यत् ''क्व प्रथगार्थानि, क्वैकार्थानि''[6] अस्य प्रश्नस्य समाधाने कथितं यत् ''राज्ञः पुरुषः इति वाक्ये प्रथगार्थानि, राजपुरुषः इति समासे पुनः एकार्थानि''[7] एतद्भाष्यमेवैकार्थीभावे प्रमाणम्। इदं तात्पर्यं यत् यथा वृषभशब्दे न वृषपदेन स्वतन्त्रार्थभानम्, किन्तु वृषभपदे एव लोकेऽर्थविषयकबोधजनकत्वम्, तथा राजपुरुषः इति पदेनापि राजविशिष्टपुरुषभानसम्भवे न पुनः तस्मिन्नेवार्थे राजपुरुषपदयोः शक्तिः कल्पनीया। यदि नाम समुदायात्मकसमासरूपे पदे एकार्थीभावात्मिका शक्तिः न स्वीक्रियते, किन्तु समासवृत्तिप्राक् काले क्लृप्ता या प्रत्येकपदशक्तिः, सैव स्वीक्रियते तदा राजन् पदार्थस्य स्वातन्त्रेणार्थोपस्थापकत्वात् तत्र पदार्थान्तराऽन्वयापत्तिः। तस्मादवश्यमेव समासे एकैर्थीभावात्मिका शक्तिः स्वीकरणीया। ननु यथा समासे एकार्थीभावात्मिका शक्तिरस्तीति पक्षे समर्थसूत्रभाष्यं प्रमाणं तथा व्यपेक्षावादेऽपि समर्थसूत्रभाष्यमेवप्रमाणम्। एवं सति समासे व्यपेक्षावादमेव स्वीकरोतु, किमर्थमेकार्थीभावपक्ष एवाग्रह इति चेन्न, पक्षद्वयेपि एकार्थीभावपक्ष एव युक्त इति सिद्धान्तात्। कथमिति चेत् ग्रन्थकारः एवोत्तरं ददाति यत् ''समासे खलु भिन्नैव शक्तिः......'' इति कारिकया। अस्यां कारिकायां समासपदं वृत्तिमात्रोपलक्षणम्। अर्थात् नहि केवले समासे एव एकार्थीभावो युक्तः किन्तु व्याकरणशास्त्रस्वीकृतासु पञ्चवृत्तिस्वप्येकार्थीभावो युक्तः। यतः प्रकरणं प्रचलति समासस्य, अतः समासे एकार्थीभावपक्षे किं लाघवम्, व्यपेक्षावादे च किं गौरवमिति विचारात् प्राक् नामसमुदायात्मके समासे कथम्, अवयवातिरिक्ता शक्तिः समुदाये भवितुमर्हतीति विचारयामि। समासे शक्तिसाधकानि नाना प्रमाणानि वैय्याकरणैः दत्तानि तेषु कानिचित् प्रमाणानि दीयते।

३ पा. सूत्र २.१.१
४ महाभाष्यम्, पा.सू. २.१.१
५ महाभाष्यम्, पा.सू. २.१.१
६ महाभाष्यम्, पा.सू. २.१.१
७ महाभाष्यम्, पा.सू. २.१.१

**पङ्कजशब्दवत्।** पङ्के जातः इति विग्रहे ''सप्तम्यां जनेर्डः''[८] इति सूत्रेण डप्रत्यये कृते सति पङ्कजशब्दः साधुतां याति। यस्यार्थो भवति पङ्कनिष्ठजनकतानिरूपिता या जन्यता तदाश्रयः (पङ्कजन्यकर्ता)। अत्र हि, अंशद्वयम्, एकः अंशः पङ्क इति द्वितीयः अंशः ज इति, ज इति द्वितीयांशेऽपि, अंशद्वयम्। प्रादुर्भावात्मको जनी धातुः प्रकृतित्वेन वर्तते, कर्त्रर्थकः ड प्रत्ययः प्रत्ययत्वेन विद्यते। अतः ज इत्यस्यार्थो भवति जन्यताश्रयः। जन्यता च यत्किञ्चिज्जनकता निरूपिता भवति। अत्र जनकता किं निष्ठेति जिज्ञासायां पङ्कनिष्ठैव गृह्यते। एवं रीत्या अवयवशक्त्या पङ्कजशब्दस्यार्थो भवति यत् पङ्कनिष्ठजनकतानिरूपिता या जन्यता तदाश्रयः। एवं सति पङ्कजशब्देन यथा पद्मस्य बोधः पङ्कजन्यकर्तृत्वात् तथा दूर्वाशैवालादेरपि। परञ्च लोके पङ्कजशब्देन समुदायशक्त्या पद्मविशेषस्यैव बोधः, न तु दूर्वा शैवालादेः। तथा च यथा पङ्कजशब्दे, अवयवातिरिक्तसमुदायशक्त्यैवार्थभानं लोके तथा समासेऽपि स्वीकरणीयम्।

समासे ,अवयवातिरिक्तसमुदायशक्तिरित्यत्र मीमांसाशास्त्रमपि प्रमाणम्। मीमांसायाम्, अग्न्याधानप्रसङ्गे एको मन्त्रो विद्यते यत् ''वर्षासु रथकारः अग्निमादधीत''[९] अत्र हि रथकारः शूद्रजातीयः। ''महिष्येण करिण्यान्तु रथकारः प्रजायते'' इति स्मृतेः। महिष्यश्च क्षत्रियेण वैश्यामुत्पादितः। करिणी च वैश्यात् शूद्रायामुत्पादिता कन्या भवति। अत एवोक्तं यत् ''महिष्येण करिण्यामुत्पन्नो रथकारः''[१०] न चास्य जात्यन्तरत्वम्, अनुलोमशङ्कराणां मात्रवृत्तिजातिमत्वात्। अत एव ब्राह्मणक्षत्रियवैश्यैः क्षत्रियावैश्यशूद्रासूत्पन्नाः क्षत्रियवैश्यशूद्राः एव भवन्ति। न चेयं कल्पना मदीयकपोलकल्पितेति वाच्यम्। अत्र शङ्खस्मृतिरेव प्रमाणम्। तत्रोक्तं यत् ''अनुलोमशङ्करश्च निम्नजातीयस्त्रीषूच्चजातीयपुरुषेणोत्पन्नः। प्रकृते रथं करोतीति रथकारः इति उपपदसमासानन्तरम्, अवयवशक्त्या रथकर्मकोत्पत्तिकर्ता इत्यर्थः प्रतीयते। स्मृतिरीत्या तु समुदायशक्त्या शूद्रार्थबोधो जायते। अतोऽत्र संदेहः यत् मन्त्रे रथकारपदेन शूद्रत्वव्याप्यजात्याश्रयबोधः, अथवा रथकर्मकोत्पादकमात्रस्य बोधः। न च रथकारपदेन अवयवशक्त्या बोधः भवेत् समुदायशक्त्या वा विशेषाभावान्न काचिद्धानिरिति वाच्यम्, यदि रथकारपदेन शूद्रत्वव्याप्यजात्याश्रयस्य बोधः स्यात् तदा ''स्त्री शूद्रौ नाधीयताम्'' इति मनुस्मृतिदिशा शूद्रस्य वेदाऽध्ययनेऽधिकाराभावात्, अग्न्याधानस्य च मन्त्रपूर्वकत्वात्, अग्न्याधानस्योत्पत्तेरभाव एव स्यात्। ननु शूद्रस्य वेदाऽध्ययनेऽधिकाराभावेन रथकारपदेन न समुदायशक्त्या अर्थबोधः कर्तुं शक्यते, अतः अगत्या अवयवशक्त्यैव बोधः स्वीक्रियताम् इत्यपि न वक्तुं शक्यते। ''योगात् रूढिः वलीयसी'' इति सिद्धान्तेन यत्र रुढिशक्त्या, अवयवशक्त्या चोभयथा बोधप्रसक्तः तत्राऽन्तरङ्गत्वात् समुदायशक्त्यैव बोधः करणीयः। यतोहि

८ पा. सूत्र. ३.२.९७
९ वै.भू.सा.समासशक्तिप्र.पृष्ठसंख्या २८१,
१० वै.भू.सा.समासशक्तिप्र.प्रभाटीका पृष्ठसंख्या २८०,

समुदायेनार्थोपस्थितिः शीघ्रतया जायमानत्वेन समुदायशक्त्याऽर्थो पस्थितिरन्तरङ्गा। अवयवशक्त्या अर्थोपस्थितिः विलम्बेन जायमानत्वेन, अवयवशक्त्यार्थबोधो बहिरङ्गः। यत्रैककालावच्छेदेन कार्यद्वयस्य प्राप्तिः तत्राऽन्तरङ्गत्वेन विवक्षितं कार्यमेव पूर्वं सम्पादनीयम्। अतोऽत्र रथकारपदेन समुदायशक्त्यैवार्थबोधः स्वीकरणीयः। समुदायशक्त्या चार्थबोधे, अग्न्याधानं न सम्भवति, अवयवशक्त्यार्थबोधे हि ''योगात् रूढिर्बली यसी'' इति सिद्धान्तविरोधः। एवं रीत्या पक्षद्वयेऽपि विरोधमुत्पाद्य रथकारपदेन समुदायशक्त्यैवार्थबोधः इति सिद्धान्तितं मीमासकैः। यद्यपि रथकारपदे समुदायशक्त्या शूद्रत्वव्याप्यजात्याश्रयस्य बोधे अग्न्याधानं न सम्भवति वेदे शूद्राणामधिकाराभावात्, तथापि, अग्न्याधानविधायकश्रुत्या तदुपयोगिमन्त्रेषु तेषामप्यधिकारः स्वीकरणीय इति मीमांसकानां सिद्धान्तः। यदि नाम समुदायात्मकसमासे, एकार्थीभावात्मिका शक्तिः न स्यात् तदा अग्न्याधानमन्त्रे रथकारपदेन शूद्रग्रहणाय लक्षणैव कर्तव्या भविष्यति। समुदायशक्त्या शूद्रस्याधिकारित्वं प्रकल्प्य विधानसामर्थ्यादपूर्वविधानकल्पनमयुक्तं स्यात्। समुदायशक्त्यस्वीकर्तॄणां मते निषेधकश्रुतिविरोधपरिहाराय रथकारकर्तृकाग्न्याधानोपयोगिमन्त्र-कर्मकाऽध्ययनभिन्नाऽध्ययननिषेधपरत्वं श्रुतेः वाच्यमिति संङ्कोचादिरूपं गौरवमन्तरेण अवयवशक्त्या ब्राह्मणादिग्रहणेनैव श्रुतिविधानोत्पत्तौ तदयुक्तं स्यादिति तात्पर्यं समुदायशक्तिस्वी-कर्तॄणां जनानाम्।

**राज्ञः पुरुषः।** राजपुरुषः। समुदाये एकार्थीभावात्मिका शक्तिः स्वीकरणीया, इत्यत्र, अपरमपि प्रमाणं विद्यते वैय्याकरणानां मते तच्च राज्ञः पुरुषः, राजपुरुषः, इति वाक्यप्रयोगः। प्रमाणमित्थं वर्तते। यदा राजपुरुषपदयोः समासो भवति तदा राजपुरुषः इति पदेन उभयवादिमते (प्रकारतासंसर्गता) स्वत्वसम्बन्धेन राजविशिष्टः पुरुषः इति बोधो जायते। यतः शक्तिभाष्यसम्बन्धवच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति मुख्यविशेष्यतासम्बन्धेनोपस्थितिः कारणमिति कार्यकारणभावानुरोधेन राजपदार्थे पदार्थान्तरस्याऽन्वयो न सम्भवति। राजपदार्थस्य मुख्यविशेष्यतयोपस्थितेरभावात्। यदि समुदाये शक्तिः न स्यात् तदा पुरुषपदार्थवत् राजपदार्थस्यापि मुख्यविशेष्यतयोपस्थतिसत्त्वेन तत्र विशेषणान्तरस्य शोभनादिपदार्थस्याऽन्वयसम्भवे शोभनस्य राज्ञः पुरुषः इति वत् शोभनस्य राजपुरुषः इत्यपि प्रयोगापत्तिः। तन्माभूत अतः समुदाये शक्तिः स्वीकरणीया।

ननु यदा राजपुरुषः इति समुदाये शक्तिः तदा समुदायात् राजसम्बन्धवत् पुरुषस्योपस्थितौ राजपदार्थस्य मुख्यविशेष्यतयोपस्थितेरभावेन न तत्र विशेषणतया पदार्थान्तरस्याऽन्वयः, परञ्चोक्तकार्यकारणभाव एवाप्रामाणिकः, अतो न सः समासे एकार्थीभावशक्तिसाधकः इति, चेदत्रोच्यते— घटपदस्य घटघटत्वसमवायेषु शक्तिः। तत्र घटस्याऽनित्यत्वेऽपि घटत्वे नित्यता

जातेर्नित्यत्वात्। ''जात्याकृतिव्यक्तयस्तु पदार्थ:''[११] इति सिद्धान्तेन यथा घटपदार्थ: तथा घटत्वमपि पदार्थ:। भेदस्त्वयमेव यत् घटपदार्थस्योपस्थिति: मुख्यविशेष्यत्वेन भवति घटत्वस्य च विशेषणत्वेन भवति। यदि शक्तिभाष्यसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति मुख्यविशेष्यतासम्बन्धेनोपस्थिति: कारणमिति कार्यकारणभावो न स्यात् तदा घटत्वे नित्यपदार्थान्वयाभिप्रायेण नित्यो घट: इति प्रयोग: स्यात्। यदा च कार्यकारणभाव: स्वीक्रियते तदा न दोष: घटत्वस्य विशेष्यतयाऽनुपस्थिते:। एवं प्रकृते राजपुरुष: इत्यत्राऽपि समासानन्तरं राजपदार्थस्योपस्थिति: प्रकारतया भवति। अत: प्रकारतयोपस्थितौ राजपदार्थे पदार्थान्तरस्याऽन्वयो न भविष्यति। एवं रीत्या समस्यमाने पदार्थे यस्योपस्थिति: प्रकारतया भवति तत्र पदार्थान्तरस्याऽन्वयभिया समासे शक्ति: स्वीकरणीयेति मतं यद्यपि समीचीनं न प्रतिभाति तथापि बहूनि कारणानि सन्ति यानि समासे शक्तिसाधकानि भवन्ति। तत्र प्रथमं कारणं किमस्तीति विचारयामि— इदं तु सत्यं साधुत्वविषया स्मृति:[१२]। इति भर्तृहरिप्रतिपादितसिद्धान्तदिशा वैय्याकरणानां शब्दसाधुत्वाऽन्वाख्यानं मुख्यमुद्देश्यम्। अपि च यदर्थाभिप्रायेण शब्दप्रयोग: तस्य बोध: स्यात्। यदि नामसमुदायत्मके समासरूपे पदे शक्ति: न स्यात् तदा चित्रगु: शब्दस्य साधुत्वं न स्यात्। तच्चेत्थम्। चित्रा: गाव: यस्येति विग्रहे ''अनेकमन्यपदार्थे''[१३] इति सूत्रेण समासे सति चित्रगो इति भवति। यत: बहुव्रीहिसमासनिष्पन्नप्रातिपदिकजन्यबोधे अन्यपदार्थनिष्ठविशेष्यतानिरूपिता प्रकारता समस्यमाने पदार्थे भाषते। अत: उपसर्जनगोशब्दान्तस्य प्रातिपदिकस्य उपसर्जनस्त्रीप्रत्ययान्तस्य च प्रातिपदिकस्य ह्रस्वो भवतीत्यर्थकेन ''गोस्त्रियोपसर्जनस्य''[१४] इति सूत्रेण ह्रस्वे सति चित्रगु: इति शब्द: सिद्ध्यति। बोधश्च चित्राऽभिन्नगोस्वामिक: पुरुष: इति भवति। अस्माभिरत्र पृच्छ्यते यत् समासे शक्त्याभावे उक्तबोध: कथं क्रियते इति प्रश्ने इदमेव वक्तुं शक्यते यत् यत्र अभिधाशक्त्या अभिलषितार्थबोधो न जायते। तत्र अगत्या लक्षणयैव बोध: सम्पाद्यते शास्त्रकारै:। यद्यत्र लक्षणया बोध: क्रियते तदा अवश्यमेव विचारणीयं यत् कस्यपदस्य कस्मिन्नर्थे लक्षणा

पूर्वपदभूतस्य चित्रापदस्य, उत्तरपदभूतस्य गोपदस्य, उभयपदस्य वा ? तत्र यदि उत्तरपदभूतस्य गोपदस्य गोस्वामिरूपेऽर्थे लक्षणा विधीयते, तदा गोपदं लक्षणया गोस्वामिरूपार्थबोधकम् गोपदार्थ: पदार्थैकदेशो जात: तस्मिन् पदार्थैकदेशे गोपादार्थे चित्रापदार्थस्याऽभेदेनाऽन्वयाऽसम्भव:। यदि एतद्दोषवारणाय गोपदस्यैव चित्राऽभिन्नगोस्वामिनि रूपेऽर्थे लक्षणां स्वीकृत्य चित्रापदस्य तात्पर्यग्राहकत्वं मन्यते तदा समास एवाऽसम्भव:। यतोहि

११ न्याय सूत्र २.२.६८

१२ नानार्थिकामिमां कश्चित् व्यवस्थां कर्तुमर्हति। तस्मान्निबध्यते शिष्टै: साधुत्वविषया स्मृति:।। वा. प.१.२९

१३ पा. सूत्र २.२.२४

१४ पा. सूत्र १.२.४८

ये जनाः समासे शक्तिं न स्वीकुर्वन्ति तेषां मते व्यपेक्षारूपसामर्थ्ये एव समासो भवति। व्यापेक्षा च ''स्वार्थपर्यवसायिनां पदानामाकांक्षादिवशाद् यः परस्परसम्बन्धः सा व्यपेक्षा''[१५] इयं च व्यपेक्षा चित्रगुरित्यत्र गोपदस्य चित्राऽभिन्नगोस्वामिनि रुपेऽर्थे लक्षणा चित्रापदस्य तात्पर्यग्राहकत्वे नैव सम्भवति यतो हि पूर्वपदभूतस्य चित्रापदस्य कश्चिदर्थाऽभावेन स्वार्थपर्यवसायित्वं न जातम्। न वा आंकाक्षादिवशात् परस्परसम्बन्धो जातः। एवञ्च व्यपेक्षायाः अभावात् समासाऽसम्भवः। न च चित्रा पदस्य गोपदस्य च, चित्राऽभिन्नगोस्वामिनि रूपेऽर्थे लक्षणास्वीकारे निर्वाहः। भिन्नभिन्नाऽनुपूर्विकत्वेऽपि समानार्थकत्वात् ''विरूपाणामपि समानार्थकानाम्'' इति वार्तिकेनैकशेषप्रसङ्गः। अपि च यदि चित्रगुः इत्यत्र कस्यचिदेकपदस्य, उभयपदस्य वा लक्षणा अङ्गीक्रियते तदा समास एवाऽसम्भवः वृत्तित्वेन चिकीर्षितपदानां परस्परनित्यसापेक्षत्वाभावात्। ''समर्थानां पदविधिः'' इति सूत्रप्रामाण्यात्, ''भवति वै नित्यसापेक्षे समासः'' इति वार्तिकप्रामाण्यात् '''' सापेक्षमसमर्थवत्'' इति भाष्यप्रामाण्याच्च सामर्थ्ये एव समासो भवति। सामर्थ्यञ्च वृत्तित्वेन चिकीर्षितानां पदानां परस्परापेक्षत्वम्। लक्षणयां परस्परापेक्षत्वाभावात् चित्रगुः पदे समासो दुरुपपादः। तस्मात् चित्रगुः इति पदेन अभिलषितार्थबोधः अभिधारूपसमासशक्त्यैव सम्भवति न तु लक्षणया। ननु यदि फलविशिष्टव्यापारो धात्वर्थः'' इति विशिष्ट धात्वर्थवादिनां मते व्युत्पत्तिवैचित्र्यात् यथा पदार्थैकदेशस्य फलस्य धात्वर्थव्यापारे प्रामाणिकैः अन्वयः अङ्गीक्रियते, तद्वत् चित्रगुः इत्यत्रापि, उत्तरपदभूतस्य गोपदस्य गोस्वामिनि रूपेऽर्थे लक्षणानन्तरं यः गोस्वामिरूपोऽर्थो जातः तस्य पदार्थैकदेशे गोपदार्थे चित्रापदार्थस्याऽभेदेनाऽन्वयं कृत्वा चित्राऽभिन्नगोस्वामी इति बुभुत्सितार्थः क्रियते तदा शब्दसाधुत्वमेवाऽसम्भवम्। यतोहि बहुव्रीहिसमासे, इतरपदार्थनिष्ठविशेष्यतानिरूपित-प्रकारताश्रयत्वमेवोपसर्जनत्वं भवति। प्रकृते इतरपदार्थान्वितगोरूपस्वाम्यर्थस्योपसर्जनत्वाभावेन '' गोस्त्रियोपसर्जनस्य'' इति सूत्रेण ह्रस्वत्वाभावेन साधुत्वाभावात्।

अत्र केचन् आक्षिपन्ति—यत् चित्रगुः इत्यत्र उत्तरपदभूतस्य गोपस्य चित्राऽभिन्नगोस्वामिरूपेऽर्थे लक्षणा अङ्गीकारे चित्रापदं तात्पर्यग्राहकमिति मते कथमसपेक्षता जाता येन कारणेन समासाऽसम्भव इति, तत्रोच्यते- अपेक्षघटकसापेक्षत्वं समासाघटकपदार्थाऽन्विताप्रधानीभूतस्वार्थकत्वम्। प्रधान्यञ्च प्रकृतसमासजन्यमुख्यविशेष्यत्वम्। प्रकृते चित्रापदे समासघटकत्वमेव विद्यते न तु समासाघटकत्वम्। अतः असापेक्षता। अपि च

१५ वै.सि.कौ.तत्वबोधनी टीका.पा.सू.२.१.१

स्वार्थबोधकत्वमपि नास्ति।

**समासे शक्तिसाधकमपरं कारणम्**। प्राप्तोदको ग्रामः इति समस्तपदेन ''उदककर्तृकप्राप्तिकर्मग्रामः'' इति बोधो भवति। अभिमतश्च पूर्वोक्तः एव बोधः। स तु समासे शक्तिमन्तरेण न सम्भवति। कथमिति चेदुच्यते– प्राप्तम्, उदकं यमिति विग्रहे 'अनेकमन्यपदार्थे'[१६] इति सूत्रेण बहुव्रीहिसमासे सति प्राप्तोदकः इति भवति। यतः अन्यपदार्थः पुंस्त्वेन विवक्षितः अतः समासान्तरं पुंस्त्वं भवति। अत्र हि लौकिकविग्रहवाक्यात् यत्कर्मकप्राप्तिर्कतृकमुदकमिति बोधो भवति। समासात्तूदककर्तृकप्राप्तिकर्मेति बोधः। समासावस्थायाम्, उदकपदार्थस्य प्राप्तिपदार्थे कर्तृत्वसम्बन्धेनान्वयः। विग्रहे तु प्राप्तिपदार्थस्योदकपदार्थे कर्तृत्वेनान्वयः इति वस्तुस्थितिः। तथा चात्र वृत्तिविग्रहवाक्याभ्यां जायमानो योः बोधः तस्मिन् बोधे एकमेव वैलक्षण्यं प्रतिभाति। तच्च वैलक्षण्यमस्ति यत् विशेष्यविशेषणभावयोः व्यत्यासः। विग्रहवाक्ये प्राप्तिपदार्थनिष्ठप्रकारतानिरूपिता उदकपदार्थनिष्ठा विशेष्यता भवति, वृत्तिवाक्यात्तु उदकपदार्थनिष्ठप्रकारतानिरूपिता प्राप्तिपदार्थनिष्ठाविशेष्यता जायते। प्रकृते अयमेव समासाऽसमासयोर्भेदः। समासे एकार्थीभावात्मकशक्त्यस्वीकर्तॄणां व्यपेक्षावादिनां मते यथा विग्रहवाक्यघटके प्रत्येकस्मिन् पदे स्वातन्त्र्येणार्थबोधकत्वं भवति तथा व्यपेक्षारूपसामर्थ्यमादाय जायमाने समासेऽपि प्रत्येकस्मिन् पदे स्वातन्त्र्येण स्वार्थबोधकत्वं भवति। अस्यां स्थितौ यदि प्राप्तोदकः, इत्यादौ एकार्थीभावरूपं सामर्थ्यं नाङ्गीक्रियते तदा प्राप्तिपदात् उदकपदाच्च स्वातन्त्र्येणार्थोपस्थितिसत्त्वात् यत्कर्मकप्राप्तिकतृकमुदकमित्येव बोधः स्यात् न तु, उदककतृकप्राप्तिकर्मेति। इष्यते च उदककर्तृकर्मेति बोधः। तदर्थं समासे अवश्यमेव शक्तिः अभ्युपगन्तव्या।

अत्र समासशक्तिखण्डनवादिनः आक्षिन्ति– यद्यपि ''प्रकृतिप्रत्ययोः सहार्थं ब्रूतः तयोः प्रत्ययार्थस्यैव प्राधान्यम्''[१७] इति निरुक्तवचनेन प्रकृत्यर्थनिष्ठप्रकारतानिरूपिता प्रत्ययार्थनिष्ठाविशेष्यता सिद्धा भवति तथापि ''भावप्रधानमाख्यातम्''[१८] इति वचनेन क्वचित् प्रकृतिप्रत्ययार्थनिष्ठविशेष्यविशेषणभावयोः व्यत्यासो जायते। यथा कृदन्तजन्यबोधे कारकः इत्यत्र तद्धितान्तजन्यबोधे औपगवः इत्यादौ च पूर्ववचनरीत्या प्रकृत्यर्थनिष्ठप्रकारतानिरूपिता प्रत्ययार्थनिष्ठा विशेष्यता भाषते, किन्तु तिङन्तजन्यबोधे विशेष्यविशेषणभावव्यत्यासेन

१६ पा. सूत्र २.२.२४

१७ वै.भू.सा.समासशक्तिप्र.पृष्ठसंख्या २८५

१८ निरुक्त–१.१

प्रत्ययार्थनिष्ठप्रकारतानिरूपिता प्रकृत्यर्थनिष्ठा विशेष्यता भाषते। यतोहि पचति पदेन विक्लित्यनुकूलो व्यापार: इत्येव बोधो वैय्याकरणनये भवति। नहि मात्र तिङन्ते एव विशेष्यविशेषणभावयो: व्यात्यास:, अपितु समासवृत्तिजन्यबोधेऽपि चित्रगुरित्यादौ विग्रहवाक्यजन्यबोधो गोपदार्थमुख्यविशेष्यक:। समासजन्यबोधस्तु गोपदार्थप्रकारकान्यपदार्थविशेष्यक:। एवं सति यदि प्रकृतिप्रत्ययार्थयो: विशेष्यविशेषणभावव्यत्यासविषये कश्चन् स्थिर: सिद्धान्त एव नास्ति यत् प्रत्ययार्थस्य प्रकारताविशेष्यता कुत्र ? प्रकृत्यर्थस्य च प्रकारताविशेष्यता कुत्र ? अस्यां स्थितौ प्रकृते प्राप्तोदक: इत्यत्रापि न कश्चन दोष:। यतोहि प्राप्तोदक: इत्यत्र समासघटकीभूतं यत्प्राप्तपदं तत्रांशद्वयम्। एक: प्रकृत्यंश: अपरश्च प्रत्ययांश:, प्रत्ययांशे क्तप्रत्ययस्य कर्ता अर्थ: ''गत्यर्थकर्मणि.....[१९] इति सूत्रेण कर्तरि विधानात्। प्रकृत्यंशस्य प्राप्नोते: उत्तरदेशसंयोगावच्छिन्नक्रिया अर्थ:। अत्रापि तिङन्तजन्यबोधवत् प्रकृत्यर्थप्रत्ययार्थयो: विशेष्यविशेषणभावे वैपरीत्यं कल्प्यते। अर्थात् प्राप्तपदार्थे क्तप्रत्ययार्थकर्ताविशेषणम्। धात्वर्थो विशेष्य:। विशेषणीभूते क्तप्रत्ययार्थकर्तरि, उदकपदार्थस्याऽभेदसम्बन्धेना ऽन्वय:। एवं क्रियमाणे सति प्राप्तोदकपदेन उदकाभिन्नकर्तृकप्राप्तिकर्मीभूतो ग्राम:, इति व्यपेक्षावादेऽपि अभिमतार्थबोधसम्भवे न तदर्थं समासे शक्ति: अङ्गीकर्तव्येति। परञ्चेदं न समीचीनं प्रतिभाति। यतोहि दर्शनान्तरनये अस्ति वादद्वयम्। एक: प्रकारतावाद: अपरश्च संसर्गतावाद:। यत्र विशेषणवाचकपदोत्तरविभक्ते: न कश्चिदर्थ: किन्तु विभक्ति: केवलं साधुत्वार्थिका, तत्र भवति संसर्गतावाद:। यत्र च विशेषणवाचकपदोत्तरविभक्त्या पदनिष्ठ वृत्तिज्ञानाधीनार्थोपस्थिति: जायते तत्र प्रकारतावाद:। यथा राज्ञ: पुरुष:, इत्यत्र स्वत्वसम्बन्धेन राजविशिष्ट: पुरुष: इत्याकारक: बोध:, तथा राजपुरुष: इति समासादपि भवति संसर्गतावादे। प्रकारतावादे राज्ञ: पुरुष: इति विग्रहवाक्यात् राजनिरूपितस्वत्वान् पुरुष: इत्येव बोध:। यतोहि राजपदार्थस्य निरूपितत्वसम्बन्धेन प्रत्ययार्थे स्वत्वेऽन्वय: प्रत्ययार्थस्वत्वस्य च आश्रयतासम्बन्धेन पदार्थान्तरे पुरुषेऽन्वय:। यद्यपि प्रकारतावादे समासवाक्यात् न विग्रहवाक्यवत् बोधसम्भव: विभक्ते: लोपात्, अतो ''वृत्तिविग्रहयो: समानार्थकत्वनियम:'' इति वादस्य भङ्गापत्ति: प्रतीयते तथापि तन्मते लुप्तषष्ठीजन्यपदार्थोपस्थितिसहकारेण विग्रहवाक्यादिव समासादपि राजनिरूपितस्वत्ववान् पुरुष:, इत्याकारक एव बोधसम्भवेन न काचित् विप्रतिपत्तिरिति वस्तुस्थिति:। परञ्चास्मिन् मते प्रतिबन्धकवशात् लुप्तविभक्ते: स्मरणाभावे वृत्तिविग्रहयो: समानार्थबोधाभावे पूर्वोक्तनियम भङ्गभिया व्यपेक्षावादिन: विग्रहवाक्ये ङसन्तराजपदस्य सम्बन्धिनिरूपेऽर्थे लक्षणां विधाय, अभेदेन

१९. पा. सूत्र३.४.७२

पदार्थान्तरे पुरुषेऽन्वयञ्च कृत्वा राजसम्बन्ध्यभिन्नः पुरुषः, इत्याकारको बोधः यथा विग्रहवाक्यात् उपपादितः तथा समासेऽपि राजन्पदस्य पूर्वोक्तेऽर्थे लक्षणां कृत्वा पूर्वेक्तप्रकारकः शाब्दबोधः उपपादितः। अनया रीत्या प्राप्तोदकपदे लुप्तविभक्तिस्मरणस्य प्रसङ्गाभावे व्यपेक्षावादिमते उदकपदस्य उदकसम्बन्धिनि लक्षणैव कर्तव्या भविष्यति, सत्यां लक्षणायां तदेकदेशे उदके प्राप्तपदस्य तादात्म्यसम्बन्धेनाऽन्वयः सम्भवति। तथा सति न प्राप्तोदकपदेन अभिमतार्थबोधः। तस्मात् समासे एकार्थीभावात्मिकाशक्तिः स्वीकर्तव्यैवेति शम्।

सहायकाचार्यः, व्याकरणविभागः
राष्ट्रियसंस्कृतसंस्थानम्
एकलव्यपरिसरः, अगरतला, पश्चिमत्रिपुरा

*******

# तत्पुरुषसमासः तद्भेदाश्च

**डॉ. नरेशकुमारपाण्डेयः**
राष्ट्रियसंस्कृतसंस्थानम्, भोपालपरिसरः

महाभाष्यकारेण व्याकरणशास्त्रस्य प्रयोजनमुक्तं 'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्'[१] इत्युक्तम्। किन्त्वेतेषु प्रयोजनेषु प्रयोजनेषु लाघवस्य स्थानं सर्वोपरि भवति। तदुक्तम्- अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः।[२] तत्र व्याकरणप्रक्रियायां लाघवाय समासविधिर्व्याकरणशास्त्रे अत्यन्तं महत्त्वपूर्णं स्थानं विभर्ति।

समसनं समासः। अनेकपदानां मिलित्वैकपदीभवनम्। पदयोः पदानां वा समसनं- विशेष्यविशेषणभावेन सम्भूयार्थप्रकाशनं समास इति भावः। समासः पञ्चसु वृत्तिष्वन्यतमः। वृत्तयःपञ्च भवन्ति। ताश्च पञ्च वृत्तयः कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः सन्ति। अव्ययीभाव-तत्पुरुष-बहुव्रीहि-द्वन्द्वभेदैरर्थदृष्ट्या सामान्यतया समासश्चतुर्विधः। एकश्च विशेषसंज्ञाविनिर्मुक्तः केवलसमासोऽपि। एवमाहत्य पञ्च भेदाः समासस्य भवन्ति। वस्तुतः समासविधायकानि यावन्ति सूत्राणि तावन्तः समासभेदा भवन्तीति कथयितुं शक्यते। भेदे सत्येव भिन्न-भिन्नविधिप्रणयनं कृतमाचमर्येण। तथापि तेषु तेषु विधिषु कञ्चित् सामान्यधर्ममाश्रित्य वैयाकरणैस्तेषां समासानां कश्चिद् भेदविशेषो दर्शितः।

तत्र पूर्वपदार्थप्रधानोऽव्ययीभावः, उत्तरपदार्थप्रधानस्तत्पुरुषः, अन्यपदार्थप्रधानो बहुव्रीहिः, उभयपदार्थप्रधानो द्वन्द्वः इति लक्षणमपि समासस्य प्रायिकत्वेन सामान्यतया वा कृतम्।[३] भूषणादौ च समासस्य षड्विधत्वमपि प्रतिपादितमस्ति-

**सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा।**
**सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः।।**[४] इत्यादिना।

तत्र तत्पुरुषसमासमभेदमाश्रित्य किंचिदुच्यते-

समासश्चतुर्विधसमासस्य द्वितीयो भेदस्तत्पुरुषः। स च तत्पुरुष-परमात्मा इव

१ म.भा.आ.१
२ प.भा.शे प.भा.सं.
३ म.भा.२.१.६
४ वै.सि.कौ. पृ.सं.२०९,

परमव्यापकः। तस्यैव व्याप्यो भेदो हि कर्मधारयः, तद्भेदश्च द्विगुः। तदुक्तम्- तत्पुरुषः[५] द्विगुश्च[६] तत्पुरुषः समानाधिकरणः कर्मधारयः[७] इति त्रीणि अधिकारसंज्ञासूत्राणि आचार्येण। एतेषामपि बहवोऽवान्तरभेदाः समासप्रकृतिमभिलक्ष्य विद्वद्भिः स्वीकृताः। तत्र भेदेषु सत्स्वपि पूर्वोत्तरपदार्थयोः सम्बन्धे कश्चित् साधारणधर्मं अभिलक्ष्य एतेषामस्मिन्नेव तत्पुरुषप्रकरणे सन्निवेशो विहितो वैयाकरणैः। च स साधारणधर्मः 'प्रायेणोत्तरपदार्थप्रधानस्तत्पुरुष इति'। यद्यपि तत्पुरुषे सर्वत्र उत्तरपदार्थस्य प्राधान्यं न भवति। अर्द्धपिप्पली, अतिमाल इत्यादौ तथादर्शनात्, एतदर्थमेव प्रायेणेत्यस्य कथनं विद्यते।

**तत्पुरुषसभेदः-**

१. **द्वितीयातत्पुरुषः**- द्वयोः पदयोस्तत्पुरुषसमासो जायते। तत्र पूर्वपदं यदा द्वितीयान्तं तदा द्वितीयातत्पुरुषसमास इत्युच्यते। यथा- कृष्णं श्रितः कृष्णश्रितः, सुखाश्रितः, दुःखापन्नः, अन्नबुभुक्षुः, मासप्रमितः, मुहूर्तसुखम् इत्यादि। तत्र सूत्रम्- द्वितीयाश्रितातीत....।[८] इत्यादिकम्।

२. **तृतीयातत्पुरुषः** - इह पूर्वपदं तृतीयान्तम्, यथा- शङ्कुलया खण्डः- शङ्कुलाखण्डः, धान्येन अर्थः- धान्यार्थः, मासेन पूर्वः- मासपूर्वः, मातृसदृशः, यन्त्रस्यूतम्, वाक्कलहः, शर्करामिश्रम्, मासावरः, मित्रत्रातः, शस्त्राहतः इत्यादिकम्। सूत्रम्- तृतीया तत्कृतार्थेन गुणवचनेन[९], पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः[१०], कर्तृकरणे कृता बहुलम्[११], कृत्यैरधिकार्थवचने[१२], अन्नेन व्यञ्जनम्[१३] इत्यादिकम्।

३. **चतुर्थीतत्पुरुषः** -यत्र समासे पूर्वपदे चतुर्थी विभक्तिः, यथा- गोभ्यः सुखम् गोसुखम्, भूतबलिः, बालकार्थं पयः,प्रतिमायै प्रस्तरः प्रतिमाप्रस्तरः, भगिन्यै कल्पितम् भगिनीकल्पितम्, अभ्यागतासनम् इत्यादि। सूत्रम्- चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः।[१४]

५ पा.सू.२.१.२२
६ पा.सू.२.१.२३
७ पा.सू.१.२.४२
८ पा.सू.२.१.२४
९ पा.सू.२.१.३०
१० पा.सू.२.१.३१
११ पा.सू.२.१.३२
१२ पा.सू.२.१.३३
१३ पा.सू.२.१.३४
१४ पा.सू.२.१.३६

४. **पञ्चमीतत्पुरुषः** – यत्र समासे पूर्वपदं पञ्चम्यन्तं पदं सः पञ्चमीतत्पुरुषसमासः। यथा चोराद् भयं चोरभयम्, कुक्कुराद् भीतः कुक्कुरभीतः, स्वर्गात् पतितः स्वर्गपतितः, आकाशपतितम्, हस्तच्युतम्, तापनिर्गलितम् इत्यादिम्। सूत्रम्– पञ्चमी भयेन[१५], अपेतापोढमुक्तपतितापत्रस्तैरल्पशः[१६], स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन[१७] इत्यादिकम्।

५. **षष्ठीतत्पुरुषः** –यस्मिन् समासे पूर्वपदे यदा षष्ठी विभक्तिर्भवति सः षष्ठीतत्पुरुषः, यथा– राज्ञः पुरुषः राजपुरुषः, देवपूजकः, सर्वेषां महत्तरः सर्वमहान्, स्वर्णभस्म, रजतखण्डः, भूभर्ता इत्यादि। सूत्रम्–षष्ठी[१८] याजकादिभिश्च[१९] इति।

६. **सप्तमीतत्पुरुषः**–यत्र समासे सप्तम्यन्तं पूर्वपदम् भवति सः सप्तमीतत्पुरुषः। यथा– अक्षेषु शौण्डः–अक्षशौण्डः, आतपशुष्कः,तीर्थध्वांक्षक्रीडाकुशलः, व्यवहारनिपुणः, पूर्वाह्णभुक्तम्, भ्राष्ट्रपक्वा, ऋजीषसिक्ता, इत्यादि। सूत्रम्– सप्तमी शौण्डैः[२०], सिद्धशुष्कपक्वबन्धैश्च[२१], ध्वाङ्क्षेण क्षेपे[२२], कृत्यैर्ऋणे[२३], संज्ञायाम्[२४] ।

तत्पुरुषसमासस्य एतेषु षट्स्वपि भेदेषु समस्यमानपदार्थयोः उत्तरपदार्थस्यैव प्रधान्यं वर्तते। अतः पूर्वपदार्थविशिष्टः उत्तरपदार्थ एव क्रियादावन्वेति। यथा– राजपुरुषमानय, क्रीडाकुशलं नय इत्यादौ राजत्वविशिष्टः पुरुषादिरेव कर्मत्वेन आनयनादिक्रियायां संबध्यते।

७. **प्रथमातत्पुरुषः**– यत्र पूर्वं पदं प्रथमान्तं भवति सः प्रथमातत्पुरुषः। स च अनेकविधः। यथा– एकदेशिसमासः। एकदेशिसमासः षष्ठीतत्पुरुषस्यैव कश्चिद् भेदःप्रायः, यत्र षष्ठीविभक्तिरुत्तरपदे अवयविवाचको भवति, पूर्वपदं तु पूर्वापरादिकं प्रथमान्तं पदं भवति। अतस्तत्र प्राधान्यं पूर्वपदार्थस्य अवयवस्यैकदेशस्यैव जायते। यथा– पूर्वं कायस्यपूर्वकायः,अपरं कायस्य–अपरकायः, उत्तरं कायस्य– उत्तरकायः, अह्नोः मध्यम् मध्याह्नः, सायाह्नः, मध्यरात्रः, अर्धं पिप्पल्याः–अर्धपिप्पली, कुम्भस्य अर्धम् अर्धकुम्भम् इत्यादि। किञ्चेह पूर्वोत्तरपदार्थयोरुभयोर्वर्तते सामानाधिकरण्यम्, अवयवावयविभावसम्बन्धसद्भावात्। अत इह उत्तरपदार्थप्राधान्यमपि वक्तुं शक्यते। तथापि 'राहोः शिरः' इतिवत् कल्पितभेदमादाय पूर्वपदार्थप्राधान्यमुक्तम् भवति। सूत्रम्–

१५ पा.सू.२.१.३७
१६ पा.सू.२.१.३८
१७ पा.सू.२.१.३९
१८ पा.सू.२.२.८
१९ पा.सू.२.२.९
२० पा.सू.२.१.४०
२१ पा.सू.२.१.४१
२२ पा.सू.२.१.४२
२३ पा.सू.२.१.४३

पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे[25] अर्धं नपुंसकम्[26] इत्यादिकम्। कर्मधारयादावपि प्रथमं पूर्वपदं भवति तथापि तेषां विशेषसंज्ञा भवति।

**८. द्विगुसमासः**– उभयोः समस्यमानपदयोः पदयोः प्रथमादिसमानविभक्तौ सत्यां समानाधिकरणः समासो भवति। स च कर्मधारय इत्युच्यते, तदुक्तं पाणिना– 'तत्पुरुषः समानाधिकरणः, कर्मधारयः'[27] इति। तत्रैव पूर्वपदं यदि संख्यावाचकं स्यात्तदा द्विगुसमासो भवति, संख्यापूर्वो द्विगुः[28] इति सूत्रनियमात्। यथा– पञ्चराजम्, सप्तगवम्, द्वैमातुरः, षाण्मातुरः, अष्टाकपालः, पञ्चगवधनः इत्यादि। तद्धितार्थोत्तरपदसमाहारे च[29] इति सूत्रसत्त्वाच्चेह समस्तपदेन समाहारार्थः, तद्धितार्थः, उत्तरपदपरत्वं वा प्रतीयते। यद्यपि इह उत्तरपदार्थप्राधान्यं नास्ति, तथापि यत्प्रधानं तदुत्तरवर्तिपदार्थगतम् अन्यपदार्थगतं वा। यथा– 'पञ्चानां राज्ञां समाहारः' पञ्चराजम् इत्यादौ प्रधानः समाहारार्थः उत्तरपदार्थराजगत एव। एवमेव 'द्वैमातुरः' इत्यादौ तद्धितार्थः, त्रिपदबहुव्रीहौ तु अन्यपदार्थः प्रधानो बोध्यः। समाहारे समासेन निष्पन्नं पञ्चगवम् इत्यादि सर्वं पदं नपुंसकलिङ्गे एकवचने चैव प्रयुज्यते,द्विगुरेकवचनम्[30], स नपुंसकम्[31] इति सूत्रनियमात्।

**कर्मधारयसमासः अनेकविधः**–

**९. उपमानपूर्वपदकर्मधारयसमासः**– यस्मिन् समासे संख्याभिन्नं समानाधिकरणं पूर्वपदम्, स सर्वोऽपि कर्मधारयसमास एव भवति। तत्र अर्थवैशिष्ट्य-बोधनाय अनेकेऽवान्तरभेदा भवितुमर्हन्ति। तत्रैवान्यतम उपमानपूर्वपदकसमासः। यथा– घन इव श्यामः घनश्यामः, श्यामसुन्दरः, मृगीव चपला मृगचपला, कुसुमकोमला इत्यादि। सूत्रम्– उपमानानि सामान्यवचनैः[32]।

**१०. उपमितपूर्वपदकर्मधारसमासः**– यस्मिन् समासे उपमेयवाचकं समानाधिकरणं पूर्वपदम्, स उपमितपूर्वपदकसमासः कर्मधारयभेदः। यथा– पुरुषः व्याघ्र इव पुरुषव्याघ्रः, नरसिंहः, परिभाषेन्दुः, वचनामृतम् इत्यादि। सूत्रम्–उपमितं व्याघ्रादिभिः सामान्याप्रयोगे[33] इति।

**११. विशेषणपूर्वपदकर्मधारसमासः**– यत्र समासे समानाधिकरणं विशेषणवाचकं पूर्वपदम्,

२४ पा.सू.२.१.४४
२५ पा.सू.२.२.१
२६ पा.सू.२.२.२
२७ पा.सू.१.२.४२
२८ पा.सू.२.१.५२
२९ पा.सू.२.१.५१
३० पा.सू.२.४.१
३१ पा.सू.२.४.१७
३२ पा.सू.२.१.५५
३३ पा.सू.२.१.५६

स विशेषणपूर्वपदककर्मधारयसमासः। यथा नीलं च तदुत्पलं च नीलोत्पलम्, पापनापितः, अणककुलालः, वैयाकरणखसूचिः, कुमारश्रमणा, अपराध्यापकः, इभपोटा, कठधूर्तः, क्षत्रिययुवतिः, युवजरती इत्यादि। सूत्रम्- विशेषणं विशेष्येण बहुलम्[३४]।
पापाणके कुत्सितैः कुत्सितानि कुत्सनैः इत्यादिकम्।

**१२. मध्यमपदलोपिसमासः** - समस्तपदस्य यत्र विशेष्येणसमानाधिकरणेन समासः, स कर्मधारयः मध्यमपदलोपिसमासः शाकपार्थिवादिसमासो वा कथ्यते। यथा- शाकप्रियः पार्थिवः शाकपार्थिवः, देवब्राह्मणः, द्वयधिका दश द्वादश, त्रयोदश, द्विशतम्, अष्टसहस्रम्, विंशतिजनाः इत्यादि।

**१३. नित्यसंज्ञासमासः**- यदा समस्यमानपदाभ्यां तादृशपदैर्वा जहत्स्वार्थवृत्त्या सर्वथा भिन्नोऽर्थः संज्ञारूपो विशेषणीभूतो लाक्षणिकार्थो वाबोध्यते तदा अर्थविशेषे निपातितः स नित्यसमासः प्रोच्यते। समासेनैव तदर्थावगमात्। तत्र समासार्थबोधनाय अस्वपदविग्रहः क्रियते। यथा- अरण्येतिलका-निरर्थकः, वनकसेरुका -अतर्कितोपनतः, कृष्णसर्पः, पात्रेसमिता, गेहेशूरः, अवतप्ते नकुलस्थितं त एतत्, दास्याः पुत्रः, देवानां प्रियः पूर्वेषुकामशमी, सप्तर्षयः, नवग्रहाः, शूर्पणखा, अश्वगन्धा इत्यादि।

**१४. मयूरव्यंसकादिसमासः** - समानाधिकरणे परिकीर्तितो निपातनरूपः समासोऽयम्। तथाहि- अस्य सूत्रस्य निपातनेन अनेकविधा व्यावहारिकाः शब्दा निष्पद्यन्ते, यथा- उदक्च अवाक्च उच्चावचम्, निश्चितं च प्रचितं च निश्चप्रचम्, नास्ति किंचन यस्य सः अकिञ्चनः, नास्ति कुतो भयं यस्य सः अकुतोभयः, अन्यो राजा राजान्तरम्, चिदेव चिन्मात्रम् इत्यादि। किञ्चास्यैव गणसूत्रेण तिङन्तस्य तिङन्तेन सुबन्तेन च सह समासः अन्यपदार्थे निपात्यते, यथा- पचत भृज्जत इत्येवं सततं यत्राभिधीयते सा पचतभृज्जता क्रिया, खादतमोदता, अश्नीतपिबता, एहिपचम् कर्म तत्र प्रवर्तते, एहीडम्, चोरं जहि इत्येवं य आह स जहिचोरः, जहिस्तम्बः इत्यादीनि उदाहरणानि।

**१५. नञ्समासः** - पूर्वपदे विद्यमानो नञ् सुबन्तेन समस्यते, स नञ्तत्पुरुषसमास उच्यते, यथा- न अश्वः अनश्वः, न एषः अनेषः, असः अघटः, अब्राह्मणः इत्यादि। उत्तरपदार्थप्रधानोऽयं समासः।'नञा आरोपितत्वम् आरोपमात्रं द्योतयति। तथा च अनश्वः आरोपिताश्वत्ववान् इत्यर्थः। दीक्षितस्तु यथालक्ष्यं पूर्वपदार्थोत्तर- पदार्थोभयप्राधान्यम्, अर्थाभावेऽव्ययीभावेन सह विकल्पं च मनुते। अर्थाभावे नञा सह अव्ययीभावे सति अमक्षिकम् असन्देहम् अविवादम् इत्यादौ पूर्वपदार्थः संसर्गाभावः प्रधानम्, तत्पुरुषे अश्वभिन्नः ब्राह्मणभिन्नः इत्यादिरूपेण भेदार्थप्रतीतौ उत्तरपदार्थः प्राधानम् तथा अपुत्रः-अविद्यः इत्यादौ बहुव्रीहौ तु अन्यपदार्थः प्रधानम् भवति।

३४ पा.सू.२.१.५७

एवञ्च नञा सह त्रिविधोऽपि समासः यथालक्ष्यं सम्पादनीयः। कैय्यटस्तु तत्पुरुषे नञः प्रागभावमर्थमङ्गीकृत्य 'रक्षोहागमलघ्वसन्देहाः'[३५] पदं व्याख्याति। तथाच 'असन्देहः' इत्यस्य तत्पुरुषेऽपि प्रागभाववान् संदेह इत्यर्थप्रतीत्या 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः'[३६] इति पुंस्त्वं साधु स्यात्। तेन 'अनुपलब्धिरविवादः' इत्यादौ नञ्तत्पुरुषेणापीष्टं सिद्ध्यति। नञर्थबोधाय –

**तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।**
**अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः।।**[३७]

इति कारिका भवति। उदाहरणानि यथा– अब्राह्मणः, अपापम्, अनश्वः, अनुदरा कन्या, अपशव इमे, अधर्म इति क्रमेण योजनीयानि। इह प्रकरणे नञो नलोपाभावोऽपि निपातितः, यथा– नासत्या, नमुचिः, नकुलम्, नखम्, नपुंसकम्, नगः, नैके, नैकधा इत्यादि।

**१६. गतिसमासः** – प्रादयःक्रियायोगे गत्युपसर्गसंज्ञकाः भवन्ति। तथा च सूत्रम्–उपसर्गाः क्रियायोगे[३८] गतिश्च[३९] इति। तत्सूत्रे चकारग्रहणादन्येषामपि अनुकरणाद्यव्ययानां गतिसंज्ञा भवति। प्रकरणेऽस्मिन् ऊनविंशतिः सूत्राणि द्वे वार्तिके च पठितानि, यैः अन्येषाम् अव्ययानाम् अनुकरणवाचकानां च क्रियायोगे गतिसंज्ञा विधीयते। तत्फलं तावत् कृ–हन–प्रभृतिभ्यो धातुभ्यः पूर्वम् एतेषां गतिसंज्ञकानां प्रयोगे सति 'कुगतिप्रादयः'[४०] इति सूत्रेण तयोर्गतिधातुवाचकयोः गतिसंज्ञकः तत्पुरुषसमासो विधीयते। समासे सति 'समासेऽनञ्पूर्वे क्त्वो ल्यप्'[४१] इति ल्यब्विधिः फलम्। यथा– प्रकृत्य, ऊरीकृत्य, खाट्कृत्य, कणेहत्य, अस्तंगत्य, तिरस्कृत्य, हस्तेकृत्य, इत्यादीनि उदाहरणानि बोध्यानि। कुपुरुषः, किं राजा, किंसखा इत्यादौ तु कुत्सितेऽर्थे क्षेपे च समासो बोध्यः।

**१७. प्रादिसमासः** – प्राद्यर्थानां सुबन्तार्थेन सम्बन्धे सति तेषां 'प्रादयः'[४२] इति सूत्रेण निपातसंज्ञा जायते। निपातसंज्ञकानां तेषां प्रादीनां सुबन्तेन सह तत्पुरुषसमासं विधातुं प्रादयो गताद्यर्थे प्रथमया, अत्यादयः क्रान्ताद्यर्थे द्वितीयया, अवादयः क्रुष्टाद्यर्थे तृतीयया, पर्यादयो ग्लानाद्यर्थे चतुर्थ्या, निरादयः क्रान्ताद्यर्थे पञ्चम्या इति पञ्च वार्तिकानि भवन्ति। तैः विहितः समासः प्रादितत्पुरुषसमास उच्यते। उदाहरणं यथा– प्रगतः आचार्यः प्राचार्यः, मालम् अतिक्रान्तः अतिमालः, निष्कौशाम्बिः,

३५ म.भा. पस्पश.
३६ पा.सू.२.४.२६
३७ वै.भू.सा. नञर्थ.
३८ पा.सू१.४.५९
३९ पा.सू१.४.६०
४० पा.सू२.२.१८
४१ पा.सू७.१.३७
४२ पा.सू१.४.७९

निश्चिन्त:इत्यादि। इह अन्यपदार्थ: प्रधानं भवति ।

**१८. उपपदसमासः** – कृत्प्रत्ययविधायकसूत्रेषु यत्सप्तम्यन्तं पदम्, तेन निर्दिष्टस्य लक्ष्यस्थस्य पदस्य 'तत्रोपपदं सप्तमीस्थम्'[४३] इति सूत्रेण उपपदसंज्ञा जायते। यथा– कुम्भं करोतीति विग्रहे 'कर्मण्यण्'[४४] इति सूत्रेण कृधातोः अण् प्रत्ययो विधीयते। तत्र अण्विधायकसूत्रे सप्तम्यन्तं पदम् 'कर्मणि' इति, तेन लक्ष्ये निर्दिष्टं कर्मपदम् 'कुम्भम्' इति, तस्य उपपदसंज्ञा भवति। कृञः अणि सति वृद्धौ सत्यां 'कार' इति कृदन्त–प्रातिपदिकं निष्पद्यते। 'कर्तृकर्मणोः कृति'[४५] इति सूत्रेण कृदन्त–क्रियायोगे कर्मणि षष्ठीविधानात् 'कुम्भअस् कार'इति प्रक्रियादशायां सुबुत्पत्तेः प्रागेव 'उपपदमतिङ्' इति सूत्रेण उपपदतत्पुरुषसमासो विधीयते। तथा च समासे जाते सुब्लुकि 'कुम्भकार' इति समस्त–प्रातिपदिकात् सुबुत्पत्त्या कुम्भकारः इत्यादि परिनिष्ठितं पदं निष्पद्यते ।एवं प्रकारेण विशालोऽयं तत्पुरुषसमासः विद्वद्भिः बहुधा विभक्तः। यश्च संक्षेपेणेह प्रदर्शितः ।तथा चोक्तं वाररुचसंग्रहे –

**तत्राष्टधा तत्परुषः षड्विधः कर्मधारयः।**
**षड्विधश्च बहुव्रीहिर्द्विगुराभाषितो द्विधाः**
**द्वन्द्वश्चतुर्विधो ज्ञेयोऽव्ययीभावो द्विधा मतः।।**[४६]

।। इतिशम्।।

४३ पा.सू३.१.९२
४४. पा.सू३.२.१
४५ पा.सू२.३.६५
४६ उद्धृतं– समासवृत्तिविमर्शः पृ.सं.९६

# वृत्तिभेदविमर्शः

प्रो. सुबोधशर्मा

अत्र वृत्ति शब्देन 'परार्थाभिधानं वृत्तिः'[१] इति महाभाष्योक्ता वृत्तिर्गृह्यते। परस्य शब्दस्य योऽर्थस्तस्याभिधानं शब्दान्तरेण यत्र (समासादौ) सा वृत्तिरित्यर्थः।[२] 'विग्रहवाक्यावयवपदार्थेभ्यः परः अन्यः योऽयं विशिष्टैकार्थः तत्प्रतिपादिका वृत्तिरित्यिर्थः। प्रक्रियादशायां प्रत्येकमर्थवत्त्वेन पृथग्गृहीतानां पदानां समुदायशक्त्या विशिष्टैकार्थप्रतिपादिका वृत्तिरिति यावत्।'[३] सा चैकार्थीभावशब्दाभिधेया। तदुक्तम् कैयटेन- 'यद्यपि शब्दान्तरमेव वृत्तिः, अवयवा वर्णवदनर्थकास्तथापि सादृश्यात्तत्त्वाध्यवसायं पदानामाश्रित्य पृथगर्थानामेकर्थीभाव इत्युक्तम्'[४] इति। ताश्च कृतत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः।[५] यद्यपि नव्या एकशेषस्य वृत्तित्वं नेच्छन्ति, परार्थान्वितस्वार्थोपस्थापकत्वरूपवृत्तित्वस्य तत्राभावात्। अत एव लघुमञ्जूषायमुक्तम्- वृत्तिश्चतुर्धा-समासतद्धितकृतसनाद्यन्तधातुभेदात्।[६] अथापि वैयाकरणसिद्धान्तमञ्जूषा[७] परमलघुमञ्जूषादौ[८] पञ्चवृत्तय एव कथिताः।

प्रकारान्तरेण एतासां वृत्तीनांभूषणसार[९] परमलघुमञ्जूषादौ[१०] जहत्स्वार्थाजहत्स्वार्थारूपेण द्विधा विभागो कृतः। कृतत्तद्धितसमादिवृत्तिघटकपदानां येऽर्थाः ततः भिन्नाः समुदायशक्त्या विशिष्टैकार्थरूपा अर्थाः वृत्तितः प्रतीयन्त इत्येकः पक्षः, कृतत्तद्धितसमादिवृत्तिघटकपदानां येऽर्थाः त एवाकाङ्क्षादिबलेन वृत्तावपि भासन्त इत्यपरः पक्षः। 'समर्थः पदविधिः'[११] इति सूत्रेसमासादिवृत्तिविषये अनेके पक्षाः

१ अथ ये वृत्तिं वर्तयन्ति किं त आहुः। परार्थाभिधानं वृत्तिररित्यहुः। म.भा.पा.सू.२.१.१ पृ. ३/२८

२ पप्रदीपटीका-म.भा.पा.सू.२.१.१ पृ. ३/२८

३ बा.म.टी. वै.सि.कौ.सर्वसांसशेषप्रकरणम्

४ म.भा.प्रदीपटीका- पा.सू.२.१.१ पृ. ३/१७

५ वै.सि.कौ.सर्वसांसशेषप्रकरणम्

६ वै.सि.लघुमञ्जूषा समासादिवृत्त्यर्थः

७ वै.सि.म.पृ.२४७- स चायमेकार्थीभावः कृतत्तद्धितसनाद्यन्तधातुष्वेकशेषसमासेसु। वै.सि.म.पृ.२४७ एकशेषेपि द्वन्द्व इत्यनुवर्तनादेकार्थीभावः।

८ परमलुमञ्जूषा-पृ.२०४- समासादिपञ्चसु विशिषटे एव शक्तिः न त्ववयवे।

९ वै.बू.सा. करिका ३०- जहत्स्वार्थाजहत्स्वार्थे द्वे वृत्ती ते पुनस्त्रिधा।

१० परमलुमञ्जूषा- समासादिवृत्त्यर्थप्रकरणस्यादौ वृत्तिर्द्विधा- जहत्स्वार्था अजहत्स्वार्था च।

११ पा.सू.२.१.१

महाभाष्यकारेण प्रतिपादिताः। तत्र जहत्स्वार्थाजहत्स्वार्थावृत्त्योरेवपर्यवसानं भवति। अयं भावः- शब्देऽर्थप्रकाशनसामर्थ्यं द्विविधं भवति- व्यपेक्षारूपम् एकार्थीभावरूपञ्च। तत्र विशेषेण अपेक्षा = परस्पराकाङ्क्षा व्यपेक्षा, तथाहि- स्वार्थपर्यवसायिनां पदानाम् आकाङ्क्षादिवशाद् यः परस्परं सम्बन्धः, सा व्यपेक्षा कथ्यते।[१२] प्रक्रियादशायां प्रत्येकमर्थवत्त्वेन पृथग्गृहीतानां पदानां समुदायशक्त्या विशिष्टैकार्थप्रतिपादकत्वम् एकार्थीभावलक्षणं सामर्थ्यं भवति।[१३] तत्र वैयाकरणानां मते वाक्ये व्यपेक्षासामर्थ्यं भवति, समासादौ वृत्तौ चैकार्थीभावरूपं सामर्थ्यम्। इदमेव सामर्थ्यद्वयं विद्वद्भिः जहत्स्वार्थाऽजहत्स्वार्थावृत्तिद्वयरूपेणापि कथ्यते। तथा चैकार्थीभावस्यापरं नाम एव जहत्स्वार्था वृत्तिः। तथा व्यपेक्षारूपसामर्थ्यस्यैवापरं नाम अजहत्स्वार्थावृत्तिरिति भवति।

जहति पदानिस्वार्थ यस्यां सा जहत्स्वार्था।[१४] जहत्स्वार्थपदे 'ओ हाक् त्यागे' इत्यस्माद् धातोः शतरिप्रत्यये जसि, त्यजन्ति स्वानि-आत्मीयानि पदानि, यमर्थम्, सः अर्थः जहत्स्वः। जहत्स्वः अर्थः यस्यां वृत्तौ सा वृत्तिः जहत्स्वार्थेति द्विः बहुव्रीहिः।[१५] तद्भिन्ना वृत्तिरजहत्स्वार्था, यस्यां पदानि स्वार्थं न जहति, प्रत्युत स्वार्थं प्रतिपादयन्ति। एवञ्च पदार्थप्रतिपादकतारूपम् अजहत्स्वार्थत्वं व्यपेक्षासामर्थ्यस्य लक्षणं बोध्यम्।

तत्र जहत्स्वार्थायां वृत्तौ वृत्तिघटकपदानामानर्थक्यं भवति। अजहत्स्वार्थायाञ्च सार्थक्यमिति प्राचामभिप्रायः। तत्र जहत्स्वार्थावृत्तिः- जहति पदानि स्वार्थं यस्यां सा जहत्स्वार्था वृत्तिः। यस्यां वृत्तौ वृत्तिघटकपदानां स्वार्थत्यागो जायते सा जहत्स्वार्थावृत्तिः। यस्यां वृत्तौ पदानि स्वीयमर्थं परित्यजन्ति सा जहत्स्वार्था वृत्तिर्भवति। यथा अवयवसदृशाः प्रतिभासमाना अपि रकारादयो वर्णा, गकारादिवर्णेष्ववयवा न भवन्ति, केवलं प्रतीयन्त एव। यथा वा वृषभादिपदेषु तद्घटकं वृषादिपदमनर्थकं भवति। वृषभपदे यावकपदे च वृषपदस्य यावपदस्य च पृथगर्थवत्त्वं नास्ति। अपितु समुदायस्यैवार्थवत्त्वमस्ति। यथा वा घटादिपदेषु तटकाः घकारादयो वर्णा अनर्थकाः भवन्ति तथैव समासेऽप्यखण्डं पदमखण्डो वा पदार्थो भवति। समासे तद्घटकपदार्था असत्या वर्तन्ते। तत्र राजपुरुषपदेन समासशक्त्यैव राजविशिष्टपुरुषरूपार्थज्ञानं भवति। पुनस्तत्र राजपुरुषपदयोः शक्तिकल्पनमनुचितम्। अयमेव पक्षः महाभाष्यकारेण एकार्थीभावरूपेणाङ्गीकृतः। तदुक्तम्- 'पृथगर्थानामेकार्थीभावः समर्थवचनम्, 'पृथगर्थानां पदानामेकार्थीभावः 'समर्थ'मित्युच्यते। क्व पुनः 'पृथगर्थानि, क्वैकार्थानि? वाक्ये पृथगर्थानि- राज्ञः पुरुषः इति। समासे पुनरेकार्थानि- राजपुरुषः इति'।[१६] अस्यां वृत्तौ समासशक्त्यैवराजपुरुषपदात् राजविशिष्टपुरुषबोधोजायते। पृथक् पृथक् राजपुरुषपदयोस्तदर्थबोधकत्वं वा नास्तीति। जहत्स्वार्थावृत्तिरेव एकार्थीभावरूपसामर्थ्यं भवति।

१२ वै.सि.कौ.तत्त्वबो.पृ.१५९

१३ बालमनोरमा पा.सू.२.१.१

१४ म.भा.प्रदीपटीका-पा.सू.२.१.१ पृ. ३/२९

१५ म.भा.उद्योतटीका-पा.सू.२.१.१ पृ. ३/२९

१६ म.भा.२.१.१ पृ. ३/१७

अपि च एकार्थीभावपक्षे 'राजपुरुषः' इत्यत्र समुदायशक्त्या विशिष्टस्य राजविशिष्टपुरुषार्थस्य उपस्थितिः भवति। अत्र राजरूपार्थः पदार्थैकदेशो भवति, अतः पदार्थः पदार्थेनान्वेतीति न्यायानुरोधात् तत्र विशेषणाद्यन्वयो न भवति। तेन 'ऋद्धस्य राजपुरुषः' इत्यादिप्रयोगो प्राप्यते। व्यपेक्षापक्षे तु प्राप्तिः स्यादेव। ननु व्यपेक्षापक्षेऽपि 'सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणयोगो न'[१७] इति वार्तिकानुसारम् 'ऋद्धस्य राजपुरुषः' इति प्रयोगो न प्राप्नोतीति कथं दोषः? वार्तिकादिस्वीकारे गौरवात्।

किञ्च यथा वृषभपदात् बलीवर्दरूपार्थोपस्थितौ जातायां पुनस्तदर्थे वृषभघटकीभूतस्य वृषशब्दस्य बोधकत्वकल्पनं निष्फलत्वादनुचितम्, तथैव राजपुरुषादौ समस्तपदात् एकार्थीभावशक्त्या राजविशिष्टपुरुषभानसम्भवे पुनः राजपदपुरुषपदयोरपि तद्बोधकत्वकल्पनमनुचितम् भवति। न चैवं समासादौ विशिष्टपदार्थस्वीकारे 'देवदत्तस्य गुरुकुलम्' इत्यादौ देवदत्तादेः गुरुणानन्वयापत्तिः, तत्रापि देवदत्तपदोत्तरषष्ठ्यर्थस्य गुरुणान्वयादिति वाच्यम्, तत्रापि षष्ठ्यर्थस्य प्रधानीभूतकुलेनैवान्वयात्। सम्बन्धस्तूपस्थितगुरुद्वारक एव षष्ठ्यर्थः, न तु तदितरः। तदुक्तम्–

**समुदायेन सम्बन्धो येषां गुरुकुलादिना।**
**संस्पृश्यावयवांस्तेऽपि युजयन्ते तद्वता सह॥**[१८]

अयं भावः– यदि समासादौ वृत्तौ पूर्वोत्तरपदयोः पृथगर्थवत्त्वं स्वीक्रियेत तर्हि यथा 'ऋद्धस्य राज्ञः पुरुषः' इत्यत्र 'ऋद्धस्य' इति विशेषणस्य 'राज्ञः' इत्यत्रान्वयो भवति तथैव 'ऋद्धस्य राजपुरुषः' इत्यत्रापि राजपुरुषघटके राजपदार्थे 'ऋद्धस्य' इत्यस्यान्वयः स्यात्, तथा च 'ऋद्धस्य राजपुरुषः' इत्यस्यापि साधुत्वं स्यात्। समासे विशिष्टशक्तिस्वीकारपक्षे तु तत्र पूर्वोत्तरपदपदार्थस्वीकाराभावात् 'राजपुरुष' इत्यादौराजविशिष्टपुरुषपदार्थेराजसम्बन्धवत्पुरुषपदार्थेराजपदार्थादेः पदार्थैकदेशत्वं भवतीति 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' इति व्युत्पत्तिविरोधात् 'ऋद्धस्य राजपुरुषः' इति असाधुप्रयोगो भवति। 'ऋद्धस्य राज्ञः पुरुषः' इति व्यस्तः प्रयोगस्तु साधुर्भवति। यतो हि–राज्ञः पुरुषः इत्यत्र उभयोः राजपुरुषपदार्थयोः मुख्यविशेष्यतयोपस्थितिर्भवति। राजपदार्थस्याप्यत्रमुख्य-विशेष्यतयोपस्थितिर्भवति। पुरुषपदार्थस्यापि मुख्यविशेष्यतयोपस्थितिः–राजत्वप्रकारकराजविशेष्यकः पुरुषत्वप्रकारकपुरुषविशेष्यकश्च बोधः। अतः 'ऋद्धस्य' इत्यस्यराजपदार्थे अन्वये सति उक्तप्रयोगः साधुः भवति। परन्तु 'ऋद्धस्यराजपुरुषः' इति प्रयोगस्य साधुत्वं नास्ति, 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' इति व्युत्पत्तिविरोधात्। अर्थात् 'राजपुरुषः' इति समस्तस्थले राजपदार्थस्य मुख्यविशेष्यतयोपस्थितिर्नभवति। अत्र राजविशिष्टपुरुषपदार्थस्यैवोपस्थितिः। अतः राजपदार्थे अन्यपदार्थस्य = ऋद्धपदार्थस्यान्वयो न भवति। तथा च 'ऋद्धस्यराजपुरुषः' इत्यस्यासाधुत्वं भवति। यदि राजपुरुषपदयोः पृथक्पृथगर्थवत्त्वं स्वीकृतं स्यात्तर्हि राजपेदनापि राजपदार्थस्य मुख्यविशेष्यतयोपस्थितेः सत्त्वात् 'ऋद्धस्यराजपुरुषः' इत्यनिष्टप्रयोगः स्यात्। अतः समासे

१७ म.भा.२.१.१ पृ. ३/१४

१८ वा.प.वृ.समु.४९

विशिष्टशक्तिः स्वीक्रियतेवैयाकरणैः। व्यस्ते यादृशोऽर्थो भवति न समासेऽपितादृश एवाऽर्थो भवतीत्यत्र जहत्स्वार्था वृत्तिः स्वीक्रियते। अत एव भाष्यकारेण 'समर्थः पदविधिः'[१९] इत्यस्मिन् सूत्र व्यपेक्षापक्षम् उद्भाव्य 'अथैवैतस्मिन् व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेषः स वक्तव्यः'[२०] इति दूषणमप्युक्तम्।

न जहति स्वार्थं पदानि यस्यां सा अजहत्स्वार्था वृत्तिः। यस्यां वृत्तौ पदानि स्वीयमर्थं न त्यजन्ति साऽजहत्स्वार्था वृत्तिर्भवति। अत्र पक्षे 'राजपुरुषः' इत्यादिसमासस्थले समुदाये विशिष्टातिरिक्ता शक्तिर्न स्वीक्रियते। अतिरिक्तशक्तिबोधकप्रमाणाभावान्न समासेऽतिरिक्ता शक्तिरिति भावः। राजपुरुषपदाभ्यामर्थोपस्थितिसत्त्वात्, तत्रातिरिक्तशक्तिकल्पनं गौरवम्। अपि च पदेषु या शक्तिः क्लृता वर्तते तस्याः शक्तेः त्यागोऽप्रामाणिकः।

नच 'राजपुरुषः' इत्यादिस्थले सम्भन्धबोधकं पदं नास्ति, अतः सम्भन्धबोधार्थं समासेविशिष्टातिरिक्ताशक्तिः स्वीकार्येति वक्तुं शक्यते, आकांक्षायोग्यतासत्तितात्पर्यज्ञानबलाद् अवयवशक्त्यैव विशिष्टार्थबोधसम्भवात्। स्वत्वसम्बन्धेन राजविशिष्टः पुरुषः इत्याकारकबोधं प्रतिराजपदाव्यवहितोत्तरपुरुषपदत्वरूपाकांक्षाज्ञानं कारणमितिकल्पनेनबोधोपपत्तेरितिभावः। अयमपि अजहत्स्वार्थावृत्तिपक्षो भाष्ये स्थितः तदुक्तम्- अथवा पुनरस्त्वजहत्स्वार्थावृत्तिः।[२१] अजहत्स्वार्थावृत्तिपक्ष एव व्यपेक्षापक्षत्वेन महाभाष्यकारेणाङ्गीकृतः। तथा च भाष्यम्- 'परस्परव्यपेक्षां सामर्थ्यमेके'[२२] इति।

ननु अजहत्स्वार्थावृत्तिपक्षे अवयवार्थस्यापि सत्त्वात् 'ऋद्धस्य' इति पदस्य विशेषणत्वेनान्वयाद् ऋद्धस्य राजपुरुषः इति प्रयोगस्य साधुतापत्तिः स्यात्, राजपदार्थस्यापि मुख्यविशेष्यतया पृथगुपस्थितेः सत्त्वादितिचेन्न, 'सविशेषणानां वृत्तिर्नवृत्तस्य विशेषणयोगो न'[२३] इति वार्तिकेन निषेधात्। 'ऋद्धस्य राजपुरुषः' इत्यत्र राजपदार्थस्य पुरुषपदार्थे विशेषणणत्वात् 'ऋद्धस्य' इत्यस्य न राजपदार्थे विशेषणत्वेनान्वयः। अजहत्स्वार्थावृत्तिपक्षेऽङ्गीकृते पूर्वोत्तरपदार्थयोर्विद्यमानत्वात् 'पूर्वपदार्थप्रधानोऽव्ययीभावः' इत्यादिलक्षणामपि युक्तियुक्तं भवति। एवम्प्रकारेण जहत्स्वार्थाऽजहत्स्वार्थावृत्तिभेदेन द्वेवृत्ती स्तः। उभेऽपि पक्षे महाभाष्ये प्रतिपादितः। किन्तु 'अथैवैतस्मिन् व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेषः स वक्तव्यः'[२४] इति दूषणदानेन। 'परस्परव्यपेक्षां सामर्थ्यमेके'[२५] इत्यत्र 'एके' इति ग्रहणेन च नैयायिकाद्यन्यसम्मतः पक्षो न वैयाकरणसम्मतः पक्षः

१९ पा.सू.२.१.१
२० म.भा.२.१.१पृ. ३/१७
२१ म.भा.२.१.१ पृ. ३/३३
२२ म.भा.२.१.१ पृ. ३/३३
२३ म.भा.२.१.१ पृ. ३/१४
२४ म.भा.२.१.१ पृ. ३/१७
२५ म.भा.२.१.१ पृ. ३/३३

ध्वन्यत इति भावः। अत एवोक्तम् महाभाष्ये– 'का पुर्नवृत्तिर्न्याय्या? जहत्स्वार्था'[२६] इति। अत्रैव कैयटः– 'नहि स्वार्थमजहतः स्वेनार्थे वशीकृतस्यार्थान्तरोपपादनं घटते'[२७] इति।

एवम्प्रकारेण जहत्स्वार्थाऽजहत्स्वार्थावृत्तिभेदेन द्वेवृत्ती स्तः। जहत्स्वार्थाजहत्स्वार्थावृत्ती पुनः– भेदः, संसर्गः, भेदसंसर्गोभयम् इति भेदेन त्रिविधा भवतः। एते त्रयोऽपि वृत्तिवाच्याः सन्ति। प्रत्येकं त्रिधेति षड्विधा सा। तत्र प्रथमो वाच्यार्थो 'भेद' इति। भेदः = अन्योन्याभावः। तादात्म्यसम्बन्धेनाभावोऽन्योन्याभावः। यथा 'घटोनपटः' इति। अन्योन्याभावरूपभेदस्यवाच्यत्वे स्वीकृते सति ''राजपुरुषः'' इत्यस्मात् राजकीयपुरुषः अराजकीयपुरुषो न, 'अराजकीयभिन्नः पुरुष' इति बोधो भवति। राजभिन्नासम्बन्धीपुरुष इति यावत्। यदिअन्योन्याभावरूपभेदार्थो न स्वीक्रिये तदा यथा 'राजपुरुषःसुन्दरः' इति प्रयोगो भवति तथैव 'राजपुरुषः देवदत्तस्य' इत्यपिप्रयोगः साधुः स्यात्। यदा समासार्थो भेदोऽपि स्वीक्रियते, तदा तु 'राजपुरुषःदेवदत्तस्य' इत्युच्यमाने राजकीयपुरुषः अराजकीयपुरुषोऽपि भवतीति नाऽसौ 'अराजकीयभिन्नः पुरुषः' इति। अत 'राजपुरुषः देवदत्तस्य' इति प्रयोगो मा भूदित्येतदर्थं भेदरूपवाच्यार्थः स्वीक्रियते। यदि च 'देवदत्तस्य' इति पदस्य 'राज्ञः' इत्यत्रान्वयस्तदा न पुनः 'राज्ञः' पुरुषपदेन सह समासः। सविशेषणस्य वृत्तिर्नेति नियमसत्त्वात्। अतः समासाभावात् 'देवदत्तस्य राजुरुषः' इति न साधुप्रयोगः।

द्वितीयभेदो भवति– संसर्गः। अस्मिन् पक्षे राजपुरुषः इत्यस्मात् राजसम्बन्धविशिष्टः पुरुषः इतिबोधः। द्वयोः भिन्नपदार्थयोरेव सम्बन्धो भवति। सम्बन्धो हि सम्बन्धिभ्यां भिन्नः द्विष्ठः विशिष्टबुद्धिनियामकश्च भवति। एवञ्च यदा सम्बन्धस्तदा द्वयोर्मध्ये भेद इति भेदरूपार्थ उत्तरकाललभ्यः, अनुभेय इति यावत्। संसर्ग एव समासवाच्यः।

सम्बन्धोवाच्योऽस्ति, भेदोऽर्थतः प्रतीयते। अथवा भेदो वाच्योऽस्ति, सम्बन्धोऽर्थतः प्रतीयत इत्यत्र एकतरपक्षपातिनीयुक्तिरूपाविनिगमनानास्ति। अतः भेदसम्बन्धयोर्मध्येकस्यवाच्यता स्यादितिननिश्चयः। यदि समासस्यवाच्यार्थोभेदो न स्यात् केवलः सम्बन्ध एव समासवाच्यः स्यात्तर्हि 'राजसम्बन्धवानयम्' इत्यर्थे सति देवदत्तसम्बन्धस्यापि कदाचित् पुरुषे प्रतीतिः स्यात् प्रतिबन्धकयुक्तेरभावात्। एवञ्च 'राजपुरुषःदेवदत्तस्य च' इत्यपि प्रयोग आपद्येत्। अतो भेदोऽपि वाच्यः। यदि च केवलं सम्बन्ध एव समासवाच्यार्थो न तु भेदार्थस्तदा यस्य पुरुषस्य कोऽपि स्वामी नास्ति; राजा अपि कस्यचित् स्वामी न भवति तत्र अस्वामिकेऽपि पुरुषे राजपुरुषः इति प्रयोगः स्यात्। भेदमात्र स्वीकारे, राजकीयभिन्नेऽर्थे स्वीकृते सति सम्बन्धस्य परित्यागोऽपि स्यात्। अर्थात् यस्य पुरुषस्य कश्चिदपि स्वामी नास्ति सोऽपि पुरुषो राजभिन्नः, तस्य असम्बन्धित्वेन राजपुरुषपदवाच्यता स्यात्। अतः संसर्गोऽपिवाच्यः। तथा च समासस्य भेदः संसर्गश्च वाच्यः। एवं राजपुरुष इति समस्तपदेन ''अराजकीयभिन्नोराजसम्बन्धवाँश्चायं पुरुषः'' इति शाब्दबोधो भवति। यश्चास्वमिकः पुरुषः तत्र राजसम्बन्धाभावात् न राजपुरुष इति प्रयोग इति भावः। तदुक्तम्–अपर

२६ म.भा.२.१.१ पृ. ३/२९

२७ म.भा.प्रदीपटीका–पा.सू.२.१.१ पृ. ३/२९

आह-भेदसंसर्गौ वा सामर्थ्यम्।[२८] भेदः संसर्ग उभयं चेति वाच्यव्यवस्थितेः।[२९]

नैयायिकादयः समासे पृथक्शक्तिर्न स्वीकुर्वन्ति। एतेषां मते तत्रैकार्थीभावरूपं सामर्थ्यं न भवति। ते सर्वत्र व्यपेक्षारूपमेव सामर्थ्यं स्वीकुर्वन्ति। नैयायिकानां मते शक्तं पदं भवति, पदसमुदायश्च वाक्यं भवति। यथा पदसमुदायः वाक्यं भवति, तथैव पदार्थसमुदायः वाक्यार्थो भवति। अतः पदसमुदाये समासे वाक्ये वा अवयव-शक्तिव्यतिरिक्ता काचित् समुदायशक्तिर्न भवति। यतो हि क्लृप्तया अवयवशक्त्यैव समासे यदि अर्थोपपत्तिः भवितुमर्हति, तर्हि समुदाये शक्त्यन्तरं किमर्थं कल्प्येत? आकांक्षादिवशात् क्लृप्तया अवयवशक्त्यैव विशिष्टार्थबोधो जायते। यत्र च समुदायेन अवयवार्थातिरिक्तः कश्चन अर्थः प्रतीयते, तत्र लक्षणादिना सर्वं व्यवस्थाप्यते।

वैयाकरणाः समासादिवृत्तौ अवयवशक्त्यतिरिक्तां समुदायशक्तिं स्वीकुर्वन्ति। एतेषां मतानुसारं यथा 'घटः,पटः' इत्यादौ घकारादिवर्णसमुदायरूपो घटादिशब्दोऽर्थवान्, घटादिशब्दघटकः एकैकवर्णोऽनर्थकः, तथैव वृत्तावपि समुदायस्यैवार्थवत्त्वम्, वृत्तिघटकानि पदानि अनर्थकानि। वाक्ये 'राजा' इत्यपि अर्थवान्, पुरुषः इत्यपि अर्थवान्, किन्तु 'राजपुरुषः' इत्यादिवृत्तौ विद्यमानः राजशब्दः पुरुषशब्दो वा अर्थवान्नास्ति। अपितु 'राजपुरुष' इति समुदाय राजत्वप्रकारकपुरुषविशेष्यकबोधे अर्थवान् वर्तते। अतः समुदाये शक्तिः आवश्यकी। अन्यथा यथा 'ऋद्धस्य राज्ञः पुरुषः' इत्यादौ वाक्ये राजाद्यर्थस्य स्वतन्त्रोपस्थितिसत्त्वात् तत्र विशेषणलिङ्गसंख्यादीनामन्वयः स्यात्, तथैव 'राजपुरुष' इत्यादवपि घटकेन राजादिपदेन स्वातन्त्र्येण अर्थोपस्थितिसत्त्वात् तत्र विशेषणाद्यन्वयः स्यात्।

अपि च यदा वाक्ये समासे वा सर्वत्र व्यपेक्षारूपमेव सामर्थ्यं स्वीकरिष्यते, तथा च तादृशसामर्थ्ये (व्यपेक्षारूपसामर्थ्य एव) समासविधानं स्वीकरिष्यते, तदा सर्वत्र समास एव स्यात्, वाक्यं कुत्रापि न स्यात् अर्थात् समासो वाक्यस्य नित्यं निवर्तको भवेत्। किन्तु विकल्पेन वाक्यमपि इष्यते समासोऽपि। अतः एतदर्थं व्यपेक्षापक्षे 'विभाषा'[३०] इति सूत्रम् आवश्यकम्।

शाब्दिकानां मते तु व्यपेक्षारूपं सामर्थ्यं यदा विवक्षितं भवति तदा 'राज्ञःपुरुषः' इत्यादिवाक्यं भवति, यदा च एकार्थीभावरूपसामर्थ्यस्य विवक्षा भवति तदा 'राजपुरुष' इति समासो भवति। अतः अस्मिन् पक्षे समासस्य विकल्प बोधकं वचनस्य 'विभाषा'[३१] इति सूत्रस्य आवश्यकता न भवतीति लाघवमस्ति। तथा च कैयटः- 'इह व्यपेक्षायां समासो न भवति। एकार्थीभावे वाक्यं नेति ----नार्थो विकल्पेन'।[३२] तथापि भगवान् पाणिनिः लक्षणैकचक्षुष्कान् मन्दान् प्रतिक्वैकार्थी भावोनित्यः क्व पाक्षिकः क्व नास्त्येवेति बोधनार्थं सूत्रं स्वीकृतवान्।[३३] लक्षैकचक्षुस्कान् प्रति तु सूत्रं प्रत्याख्यातं

२८ म.भा.२.१.१ पृ. ३/३२
२९ वै.भू.सा. कारिका-३१
३० पा.सू.२.१.९
३१ पा.सू.२.१.९
३२ म.भा.प्रदीपटीका- पा.सू.२.१.१
३३ ल.श.शे. पा.सू.२.१.९

समर्थसूत्रभाष्ये।[३४]

अत एव भाष्यकारेण **समर्थः पदविधिः**[३५] इत्यस्मिन् सूत्रे व्यपेक्षापक्षम् उद्भाव्य 'अथैवैतस्मिन् व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेष: स वक्तव्य:'[३६] इति दूषणम् अपि उक्तम्। अत: समासादिवृत्तिषु जहत्स्वार्थावृत्ति: अथ चैकार्थीभावरूपं सामर्थ्यं स्वीकार्यम्।

नन्ववयवार्थास्वीकारे प्रायेण पूर्वपदार्थप्रधान: अव्ययीभाव:, प्रायेणोत्तरपदार्थप्रधान: तत्पुरुष:, इत्यादिसमासलक्षणं कथं संगच्छेत? इति चेदुच्यते- रेखा गवयादि निष्ठलाङ्गूलादेर्वास्तवपश्वलक्षणत्ववदेतेषामपि न वास्तवसमासलक्षणत्वम्। बोधकता तु तद्वदेव रेखागवयादिषु = चित्रस्थगवयादिषु दृश्यमानं शृङ्गलाङ्गूलादिकं वास्तवस्य पशो: लक्षणं न भवति तथापि अवास्तवपशौ विद्यमानमपि शृङ्गलाङ्गूलादिकं वास्तवपशो: बोधकं भवत्येव तथैव विग्रहवाक्यनिष्ठपूर्वपदार्थप्राधान्यादिकं समासे अविद्यमानमपि समासस्य बोधकं भवति। वस्तुत: 'पूर्वपदार्थ- प्रधान:' इत्यादिरूपं लक्षणं समासस्य नास्ति। अपितु- अव्ययीभावाधिकारपठितत्वमव्ययीभावत्वम् , इत्यादिकं लक्षणं बोध्यम्।

अपि च समासे शक्त्यस्वीकारे 'चित्रगुमानय' इत्यादौ कर्मत्वाद्यनन्वयापत्ति: स्यात्, यतोहि प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामिति नियमानुसारेण प्रकृत्यर्थेन प्रत्ययार्थस्यान्वयो वाच्य:। यत: प्रत्ययविधानं सा प्रकृति:। अत्र अम्विधानं 'चित्रगु' इति समुदायाद् वर्तते, अत: प्रकृति: 'चित्रगु' इति समुदाय:। यदि चित्रगुरूपप्रकृते: कश्चन अर्थो न स्वीक्रियेत तदा प्रकृत्यर्थत्वाभात् अम्प्रत्ययार्थकर्मत्वादेरन्वय एव कथं भवेत्?

किञ्च समासे समुदायशक्त्यस्वीकारे तस्यार्थवत्त्वाभावात् राजपुरुषादिसमस्तपदस्य प्रातिपदिकसंज्ञादिकं न स्यात्। यतोहि अर्थवत: शब्दसमुदायस्यैव प्रातिपदिकत्वादिक संज्ञा भवति।[३७] कृत्तद्धित[३८]त्यत्रापि अर्थवदित्यनुदृत्ते:। लाक्षणिकमर्थमादायापि समासस्य प्रातिपदिकत्वं विधातुं न शक्यते, यतोहि यदि शक्तिरेव नास्ति, तदा शक्यसम्बन्धरूपा लक्षणा कथं सम्भाव्येत? अत: समासे जहत्स्वार्थावृत्ति: समुदायशक्तिश्च स्वीकरणीया। अत अवयवार्थत्यागपूर्वकसमुदायशक्त्या अर्थोपस्थापकत्वरूपमेकार्थीभावरूपं सामर्थ्यं भवति। अवयवशक्त्या निर्वाह: कथमपि भवितुं नार्हतीति प्राचामभिप्राय:। यदा 'राजपुरुष:' इत्यादौ समास: भवति, तदा तदा वृत्तिघटकपदानि स्वार्थं त्यजन्ति। तत्र समासादिवृत्तिमहिम्ना समुदाये एका भिन्ना शक्तिरुत्पद्यते। सा चोत्पद्यमाना शक्ति: कुत्रचित् पूर्वोपस्थितार्थसदृशार्थमुपस्थापयति, कुत्रचिगा सर्वथा भिन्नमेवार्थम् उपस्थापयति। किन्तु भिन्न एव

३४ म.भा.- वचनानर्थक्यं स्वभावसिद्धत्वात् पा.सू.२.१.१, म.भा.उद्योतटीका- वचनपदेन महाविभाषोच्यते। पा.सू.२.१.१

३५ पा.सू.२.१.१

३६ म.भा. पा.सू.२.१.९

३७ पा.सू.१.२.४५

३८ पा.सू.१.२.४५

समासार्थः। न चात्र पक्षे राजपुरुषः, महाबाहुः सुपन्थाः इत्यारदिषु वृत्तिघटकपदानामनर्थकत्वात् अर्थवच्छब्दनिमित्तकं आत्वादिकं कार्यं न स्यादिति वाच्यम्, प्राग्भाविनमर्थमादाय तत्तत्कार्यसम्भवात्। अथवा 'प्रत्ययोत्तरपदयोश्च'[39], 'आन्महतः'[40], इत्यादिशास्त्रारम्भसामर्थ्यात् तत्तत्काकार्यं बोध्यम्।

शेखरकारमते तु- एकार्थीभावश्चालौकिकविग्रहवाक्य एव कल्प्यते। यथाशत्रादौ द्वितीयासामानाधिकरणयं दृष्ट्वा लकारेऽपि त्कल्पना तथा 'अन्यपदार्थे' 'समर्थः' 'चार्थे' इत्यनुवादबलादस्य तत्र (अलौकिकविग्रवाक्ये) कल्पना।[41] एवञ्च क्लृप्तशक्तित्यागे मानाभावात् प्रत्येकसहकृतया समुदायशक्त्या तथोपस्थितिः- विशेष्यविशेषणभावापन्नविशिष्टोपस्थितिः।[42] अयमेव चैकार्थीभावः। तथा च विशेष्यविशेषणभावावगाह्युपस्थिति- जनकत्वमेवैकार्थीभावत्वम्। न त्वेकार्थीभावे वृत्तिघटकपदानां सर्वथानर्थक्यमिति भावः। समासे वृत्तिघटकपदानां सर्वथानर्थक्यस्वीकारे महाबाहुः सुपन्थाः इत्यारदिषु अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम् इति परिभाषया अनर्थके अर्थवच्छब्दनिमित्तकं आत्वादिकं कर्यं न स्यात्। भूतपूर्वगत्याश्रयणं तु सत्यां गतौ न युक्तम्। तदुक्तं वृद्धैः- जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी। इति।[43] अतः समासे रुढी स्थले- अवयवार्थविरुद्धस्थले- एव जहत्स्वार्थावृत्तिः। तथा च अवयवार्थनिरपेक्षत्वे सति समुदायीर्थबोधिकात्वं जहत्स्वार्थात्वम्। अवयवार्थसंवलितसमुदायार्थबोधिकात्वमजहत्स्वार्थात्वम्। रथन्तरं- सामवेदः इति प्रथमाया उदाहरणम्, राजपुरुषः इति अन्त्यायाः।[44] नागेशेनापि समासे एकार्थीभावरूपा शक्तिः स्वीक्रियते, किन्तु एकार्थीभावः जहत्स्वार्था एवेति नाङ्गीकरोति। समासे विशेष्यविशेषणभावापन्नविशिष्टोपस्थितिः। तत्र कुत्रचित् अवयवार्थसहकृतसमुदायार्थो भवति, कुत्रचिगा अवयवार्थनिरपेक्षः सवर्था भिन्न एवार्थः। तथा चोक्तम् महाभाष्यप्रदीपव्यख्यायायाम्- 'यत्र पदान्युपसर्जनीभूतस्वर्थानि निवृत्तस्वर्थानि वा प्रधानार्थोपादानाद्व्यर्थानि, अर्थान्तराभिधायीनि वा स एकार्थीभावः' इति।[45] राज्ञः पुरुषः इति वाक्येन हि- राजत्वप्रकारकराजविशेष्यकोऽर्थः पृथगुपस्थितो भवति, पुरुषः इत्यनेनापि पुरुषत्वप्रकारकपुरुषविशेष्यकोऽर्थः पृथगुपस्थितो भवति। उभयोश्च पदार्थयोराकांक्षादिनान्वयेन विशेष्यविशेषणभावापन्नविशिष्टार्थबोधः। अत्र हि पृथगुपस्थितयोः पदार्थयोः पश्चात् संसर्गबोधः। तथा च 'राजा' इत्यपि अर्थवान्, पुरुषः इत्यपि अर्थवान्, किन्तु 'राजपुरुषः' इत्यादिवृत्तौ सत्याम् एकार्थीभावशक्त्या राजप्रकारकः पुरुषविशेष्यकः एकार्थोपस्थितिः। तत्र राजपदं पुरुषपदं च पूर्वोपस्थितविशेष्यविशेषणभावरूपमर्थं सर्वथा जहीतः,

---

३९ पा.सू.७.२.९८

४० पा.सू.६.३.४६

४१ ल.श.शे.पा.सू.२.१.१,पृ.६४३

४२ ल.श.शे.पा.सू.२.१.१,पृ.६४३

४३ ल.श.शे.पा.सू.२.१.१,पृ.६४३

४४ परमलुमञ्जूषा- समासादिवृत्त्यर्थप्रकरणम्

४५ म.भा.प्रदीपटीका- पा.सू.२.१.१-३/४

भिन्नं च विशेष्यविशेषणभावं स्वीकुरुतः। वृत्तौ हि पदार्थोपस्थिति समय एव संसर्गांशबोधः। अतोऽत्र अवयवार्थसंवलितसमुदायार्थो भवति किन्तु न सर्वथा अवयवार्थ एव।

अरुणया पिङ्गक्ष्या एकहायन्या सोमं क्रीणाति इत्यत्र पिङ्गाक्ष्यादिसमस्तयौगिकशब्दानां व्यपेक्षासमार्थ्येन गुणरूपावयवार्थोपस्थितौ सत्यां पिङ्गलाक्ष्यादीनां द्रव्यवाचकत्वं न स्यात्। मीमांसकैः लक्षणा न स्वीक्रियते तत्र, अतः तदर्थंतैरपि समासे एकार्थीभावः अवश्यं स्वीकार्यः।

नैयायिका यद्यपि सर्वत्र लक्षणाङ्गीकृत्य कार्यं निर्वाह्यन्ति। तत्रापि तदर्थं तैः सर्वत्र वृत्तिद्वयं स्वीकार्यम्, पूर्व व्यपेक्षाशक्त्या अवयवपदार्थबोधः अनन्तरं लक्षणया विशिष्टैकार्थबोधः इति वृत्तिद्वयस्वीकारे गौरवं भवत्येव, अतः एकार्थीभाव एव स्वीकार्यः।

इदमत्ररहस्यम्–एकार्थीभावसामर्थ्यं जहत्स्वार्थवृत्तिरिति। समासादिवृत्तिमत्सु पदेषु, तानि पदानि प्रक्रियादशायां विग्रहवाक्ये व्यपेक्षाशक्त्या उपस्थापितान् अर्थान् परित्यजन्ति। तदानीं समासादिवृत्तिसमनन्तरमेव तानि पदानि एकार्थीभावशक्त्या पूर्वोपस्थितान् अर्थान् समेकीकृत्य विशिष्टैकार्थम् उपस्थापयन्ति। अत एवैकार्थीभावशक्तिः, जहत्स्वार्थावृत्तिरित्युच्यते। यथा– पङ्कजपदात् प्रक्रियादशायां विग्रहकाले व्यपेक्षाशक्त्या पङ्कजनिकर्तृत्वप्रकारिका उपस्थितिः, किन्तु कृत्समासवृत्तिसमनन्तरमेव एकार्थीभावशक्त्या तस्मात् पद्मत्वप्रकारकः विशिष्टैकार्थ उपस्थितो भवति। तत्र समासघटकीकृतं पङ्कपदं जशब्दश्च स्वं स्वं सामान्यर्थं जहीतः। एवमेव समासादिवृत्तिमत्सु पदेषु एकार्थीभावरूपसमुदायशक्तिस्वीकारादेव राजपुरुषादिपदं पृथगुपस्थितान् तांस्तानर्थान् विहाय विशिष्टैकार्थं प्रतिपादयन्ति। तथा हि– ''राज्ञः पुरुषः'' इत्यादिविग्रहवाक्ये स्वत्वसंबन्धेन राजत्वप्रकारकराजविशेष्यकोऽर्थः पृथगुपस्थितो भवति, तत्र 'समृद्धस्य राज्ञः' इत्यादिप्रकारेण विशेषणयोगो भवितुमर्हति, किन्तु वृत्तौ सत्याम् एकार्थीभावशक्त्या राजप्रकारकः पुरुषविशेष्यकः एकार्थोपस्थितिः। तत्र राजपदं पुरुषपदं च पूर्वोपस्थितविशेष्यविशेषणभावरूपमर्थं सर्वथा जहीतः, भिन्नं च विशेष्यविशेषणभावं स्वीकुरुतः। इति शम्।

**व्याकरणविभागाध्यक्षः**
**राष्ट्रियसंस्कृतसंस्थानम्, भोपालपरिसरः**

*****

# समस्याविधिना समासाध्यापनम्

**डॉ. परमेशकुमारः**
सहायकाचार्यः, शिक्षाशास्त्रविभागः
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम् , नई दिल्ली

**सारांशः -**

भाषायाः वैशिष्ट्यसंसाधनाय समासः महत्त्वपूर्णभूमिकां निर्वहति। समासस्य पारम्परिकरूपेण सुयोग्यरीत्या सार्वत्रिकाध्ययनम् अध्यापनं जायते एव। पारम्परिकविधिः समासाध्ययनायाध्यापनाय च अत्यन्तं महत्त्वभूतः अस्ति। तदतिरिच्य अन्यव्याकरणविधिभिः अपि समासाध्यापनम् कारयितुं शक्यते। अत्र अनेके विधयः व्याकरणाध्यापनस्य वर्तन्ते तेषां व्याकरणविषयभेददृष्ट्या चिन्तनस्य आवश्यकता वर्तते यतः तद्द्वारा व्याकरणाध्यापनक्षेत्रे काचित् नूतना क्रान्तिः भवेदिति,यद्यपि अस्य विधेः प्राचीनकाले प्रयोगः दृश्यते। प्राचीनविधौ आक्षेपपदस्य एव अपरं नाम वर्तते समस्या इति। अस्मिन् लेखे समस्याविधेः सोपानानि वर्ण्यन्ते यथा–

- समस्याप्रदानम् (उदाहरणपूर्वकम् अध्यापनम् ) ।
- समस्यान्वेषणप्रक्रिया (विविधोदाहरणानि)।
- समासपाठनाय परिकल्पनानिर्धारणम्।
- समाधानचिन्तनम्।

अत्र हि समस्याविधिप्रवर्तनाय पाठनाय च नूतनः प्रयोगः वर्तते। अत्र समस्यासमाधानप्रक्रिया त्रिषु तत्त्वेषु वर्तते यथा– तत्त्वानां संग्रहः, तत्त्वानां संघटनम्, तत्त्वानां विश्लेषणम्। एतेन तत्त्वविश्लेषणपूर्वकम् समासाध्यापनं जायेत तर्हि अवश्यं सर्वेषां बोधः भवेदिति। समस्याविधेः उपयोगः प्राथमिकमाध्यमिकोच्चस्तरे जायते तेन सर्वविधविषयः स्पष्टीक्रियते किन्तु तत्र छात्राणां रुचेः स्थानम् अत्यन्तं भवति। अत्र विशिष्य समस्याविधेः अवलम्बनेन छात्राः अध्ययनं कुर्युः शिक्षकाः च अध्यापयेयुः। प्राचीनविदुषाम् अपि अत्र महान् उपकारः सूक्ष्मचिन्तनेन अवलोक्यते, किन्तु बहूनां पाश्चात्त्यविदुषां विकासक्रमे नामानि दृश्यन्ते। अनेन विधिना समासाध्यापनं सहजं शीघ्रग्राह्यं च जायते।

व्याकरणादृते संस्कृतभाषातत्त्वानामवबोध: असाध्य: दुरुहश्च।[१] अत: समान्याद्विशिष्टं परिज्ञानं साधयितुं व्याकरणं सुयोग्यम्। व्याकरणज्ञानं सहजतया सरलतया बोधगम्यरीत्या जायेत, तदर्थं व्याकरणज्ञानमावश्यकम्। व्याकरणाध्यापनक्षेत्रे सुतरां महत्त्वम् आवहति समास:। समासो हि कश्चन महत्त्वपूर्णो विषयो वर्तते। तस्याध्यापनं कथं प्रकर्तव्यमिति विचारणीयम्। व्याकरणशिक्षणस्यानेके मनोवैज्ञानिका: विधय: परिशील्यते येषां प्रयोगेण व्याकरणपाठने यत्र वैविध्यं भविष्यति, तत्रैव विधिमुपकर्तुं शिक्षणसिद्धान्ता: शिक्षणसूत्राणि च उपकुर्वन्ति। ये सिद्धान्त: सदैव ज्ञानप्रचाराय सर्वान् सम्प्रेरयन्ति ते च स्वाभावाविकशक्षिणतासिद्धान्त:, रुचिसिद्धान्त:, क्रियाशीलतासिद्धान्त:, प्रयोजनसिद्धान्त:, प्रयत्नसिद्धान्त:, बालकेन्द्रितसिद्धान्त:, चयनसिद्धान्त:, जीवनोपयोगिकार्यसिद्धान्त:, प्राकृतिकवातावरणसिद्धान्त:, अनौपचारिकतासिद्धान्त:। एतेषां विविधानां सिद्धान्तानामाधारेण स्वभाविकरूपेण व्याकरणं अध्याप्यते तर्हि सहजतया सर्वेषां ज्ञानं भविष्यति।

तत्र कानिचन सूत्राणि प्रकल्पितानि यथा–

सामान्यद्विशेषं प्रति,
स्थूलात्सूक्ष्मं प्रति,
सारल्यात् कठिनं प्रति,
ज्ञातादज्ञातं प्रति,
अवयवित: अवयवं प्रति,
प्रत्यक्षादप्रत्यक्षं प्रति,
आगमनात् निगमनं प्रति
निश्चियादनिश्चतं प्रति,
संश्लेषणाद्विश्लेषणं प्रति,
काल्पनिकात्सत्यं प्रति
प्रकृतित: विकृतिं प्रति

इत्योवमादिभि: शिक्षणसूत्रै: प्रयोगपूर्वकं व्याकरणाध्यापनं विधीयते तर्हि सहजतया विषयाणामवबोधो भविष्यति निश्चयेन।

सिद्धान्तानां सूत्राणां च विधिवत् प्रयोगसारणीं साधयितुं विधय: पाठनाय सुचित्रिता: आचार्यै:। ते च–

परम्परागतविधि:,
आगमनविधि:,

१. वा. प. प्र. का.

प्रोयजनविधिः,
प्रत्यक्षविधिः,
ह्यूरिस्टिकविधिः,
समस्याविधिः,
भण्डारकरविधिः,
अनौपचारिकविधिः,
प्रासङ्गिकविधिः,
इतरे विधयश्च।

एते सर्वे विधयः व्याकरणाध्यापनाय विशेषमहत्त्वं भजन्ते तत्रापि मुख्यतत्त्वरूपेण अत्र विराजते समस्याविधिः स च कः ? इति विवेचनात् पूर्वं समासस्य समान्यपरिचयं प्राप्नुमः। यतः समासाध्यापनकाले सर्वादौ विज्ञैः छात्रप्रियैः शिक्षकैः क्रमेण श्रेणीविभागपूर्वकं सिद्धान्तशिक्षणसूत्रप्रयोगपूर्वकं प्रक्रमः निर्धारणीयः। यस्मात् छात्राः शीघ्रतया विषयावगाहने दत्तचित्ताः ज्ञानिनश्च भवेयुरिति।

अत्रावधेयः विषयः यत् भाषा सरला, बोधगम्या, अनुकरणीया च स्यात्। विषयस्य विवरणं वर्णनं च सोदाहरणं भवेत्। तेन एव छात्राणां पूर्णबोधो जायेत्।

**समासाध्यापनविविधबिन्दवः -**

♦ **पूर्वं सामान्यपरिचयः**

समसनं समासः, अनेकेषां पदानामेकीभवनमिति भावः।[२] अत्र अनेकानि पदानि मिलित्वा एकं पदं सम्पद्यते। समुपसर्गपूर्वकाद् असुधातोः भावे घञ्प्रत्यये कृते सति 'अत उपधायाः'[३] इत्यनेन उरधावृद्धौ समासशब्दः निष्पद्यते। वैयाकरणमते च यथा अत्र अनेकं पदं मिलित्वैकं पदं भवति तथैव समासे अर्थः अपि समुदितः एक एव भवति। समासे समुदाये शक्तिः भवतीति भावः। अर्थात् यदा अनेकानि पदानि मिलित्वा विशिष्टैकार्थस्य प्रतिपादनं कुर्वन्ति तदा समासः इत्युच्यते।

♦ **समासभेदपरिचयः**

समासभेदविषये विदुषां विभिन्नानि मतानि भवन्ति। तथाहि- प्रथमतः भेदद्वयं भवति। अर्थदृष्ट्या शब्ददृष्ट्या च। तत्र लघुसिद्धान्तकौमुद्यादिषु समासः पञ्चविधः प्रोक्तः। तथाहि- अव्ययीभाव-तत्पुरुष-बहुव्रीहि-द्वन्द्वभेदैः सामान्यतया समासश्चतुर्विधः। एकश्च

---

२. वै. सि. कौ.तत्त्व. २.१.३

३. पा.सू. ७.२.११६

विशेषसंज्ञाविनिर्मुक्तः केवलसमासोऽपि। एवमाहत्य पञ्च भेदाः समासस्य भवन्ति।[४] स चायं भेदः अर्थदृष्ट्या भवति। तत्र पूर्वपदार्थप्रधानोऽव्ययीभावः, उत्तरपदार्थप्रधानस्तत्पुरुषः, अन्यपदार्थप्रधानो बहुव्रीहिः, उभयपदार्थप्रधानो द्वन्द्वः इति लक्षणमपि समासस्य सामान्यतया वा कृतम्।[५] भूषणादौ च शब्ददृष्ट्या समासस्य षड्विधत्वमपि प्रतिपादितमस्ति। तथाहि–

**सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा।**
**सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः।।**[६] इत्यादिना।

वस्तुतः समासविधायकानि यावन्ति सूत्राणि तावन्तः समासभेदा भवन्तीति कथयितुं शक्यते। भेदे सत्येव भिन्न–भिन्नविधिप्रणयनं कृतमाचमर्येण। तथापि तेषु तेषु विधिषु कञ्चित् सामान्यधर्ममाश्रित्य वैयाकरणैस्तेषां समासानां कश्चिद् भेदविशेषो दर्शितः।

♦ समासभेदसम्बद्धाः ज्ञापनीयविषयाः यथा –

एकशेषः– माता च पिता च– पितरौ। पिता मात्रा।[७]
हंसश्च हंसी च– हंसौ। पुमान् स्त्रिया।[८]

अलुक्समासः– परस्मैपदम्[९], वनेचरः, युधिष्ठिरः[१०]

नित्यसमासः – (अस्वदविग्रहः) हरौ इति– अधिहरि।

असमर्थसमासः– अपुनर्गेयाः श्लोकाः (पुनः न गेयाः इति विग्रहः)
असूर्यम्पश्याः (सूर्यं न पश्यन्ति इति विग्रहः)

पूर्वोत्तरपदयोः विशेषः –

पूर्वपदस्य नियमाः द्विधा– (क.) सामान्यनियमाः, (ख.) विशेषनियमाः।

(क.) सामान्यनियमाः–

१. सन्धिः– भवदनुग्रहः।
२. नकारस्य लोपः– राजपुरुषः।
३. नञः लोपः (नञः नकारस्य लोपः) न ब्राह्मणः– अब्राह्मणः।
४. नुडागमः – अनीश्वरः, अनश्वः।

---

४. ल.सि.कौ. समा.प्र.
५. वै.सि.कौ.सर्वसमा.शे.प्र.
६. वै.भू.सा.स.श.प्र.
७. पा.सू. १.२.७०
८. पा.सू. १.२.६७
९. पा.सू. ६.३.८
१०. पा.सू. ८.३.९५

(ख.) विशेषनियमाः - (केषुचित् समासेषु एव विशेषनियमा)

पूर्वपस्य नियमाः-

१. पुंवद्भावः- (क.) दीर्घा रज्जुः - दीर्घरज्जुः।

(ख.) स्थिता प्रज्ञा यस्य सः स्थितप्रज्ञः)

२. महतः आत्वम् - (क.) महान् देवः - महादेवः।

(ख) बहु महती सेना यस्य सः - महासेनः।

(कर्मधारये समानाधिकरणबहुब्रीहौ च महतः तकारस्य आकारः भवति)[११]

३. आनङ् - माता च पिता च -मातापितरौ, पितापुत्रौ।

(विद्यायोनिसम्बन्धिनाम् ऋदन्तानां द्वन्द्वे आनङ् भवति। पुत्रशब्दे परेऽपि भवति।)[१२]

४. दीर्घः - (कर्मव्यतिहारबहुब्रीहौ पूर्वपदान्तस्य दीर्घो भवति) केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तम्- केशाकेशि इति।

उत्तर पदस्य नियमाः-

(क.) सामान्यनियमाः-

समासे जाते उत्तरपदस्य विभक्तेः लोपे कृते तत् पदं प्रातिपदिकरूपेण स्थितं भवति।[१३] ततः परे केचन् प्रत्ययाः भवन्ति समासान्तप्रत्ययाः रम्यपथः, दीर्घपथः[१४]

(ख.) विशेषनियमाः- उत्तरपदार्थाः प्रतिसमासं भिद्यन्ते-

तत्पुरुषे- (१) सर्वरात्रः, पूर्वरात्रः, संख्यातरात्रः (रात्राह्नाहाः पुंसि)[१५] पुण्यराजः, नवरात्रम् (सङ्ख्यापूर्वं क्लीवम्)[१६]

(२) देवराजः, सप्ताहः, कृष्णसखः (राजाहः सखिभ्यष्टच्)[१७]

(३) उत्तमः गौः - उत्तमगवः

श्रेष्ठा गौः - श्रेष्ठगवी (गोरतद्धितलुकि)[१८] टच्प्रत्ययं प्राप्नोति

(पुल्लिङ्गे अकारः स्त्रीलिङ्गे ई)

---

११. पा.सू. ६.३.४६

१२. पा.सू. ६.३.२५

१३. अन्येषामपि दीर्घः, पा.सू. ६.३.१३६

१४. पा.सू. ५.४.७४

१५. पा.सू. २.४.१९

१६. वार्त्तिकम्

१७. पा.सू. ५.४.९१

१८. पा.सू. ५.४.९२

(४) नौ शब्दः – त्रिनावम् – तिसृणां नावां समाहारः (नावो द्विगोः[१९] अर्धनावम् – अर्धं नावः अर्धाच्च)[२०]

तत्पुरुषेऽपवादः – समासान्तप्रत्ययस्यापवादः (तत्पुरुषे)

(१) सु–अति–शब्दौ (न पुजनात्)[२१] – सुराजा– शोभनः राजा
अतिराजा – अतिशयितः राजा, अत्र न समासान्तः।

(२) किं शब्दः – (किमः क्षेपे)[२२] कुत्सितः राजा – किंराजा।
कुत्सिता सखा – किंसखा
कुत्सिता गौः – किंगौ

(३) नञ् – नञस्तत्पुरुषात्[२३], पथो विभाषा।[२४]
न राजा – अराजा
न सखा – असखा
न पन्थाः – अपन्थाः, अपन्थम्

बहुब्रीहे नियमाः –

(१) धर्मशब्दः – (अनिच्) इष्टः धर्मः येन सः दृष्टधर्मा (धर्मादनिच्केवलात्)[२५]

(२) दण्डादण्डि (व्यतिहारलक्षणः इच् प्रत्ययं प्राप्नोति) (इच्कर्मव्यतिरेहारे)[२६] अव्ययं च भवति।
दण्डैः दण्डैश्च प्रहृत्य इदं युद्धं प्रवृत्तं दण्डादण्डि।

(३) धनुः शब्दः– (धनुषश्च)[२७] धनुः शब्दान्तः बहुब्रीहिः अनङ्ङादेशं प्राप्नोति। (धनुः शब्दः नकारान्तः भवति इत्यर्थः)
गाण्डीवं धनुः यस्य सः गाण्डीवधन्वा

१९. पा.सू. ५.४.९९
२०. पा.सू. ५.४.१००
२१. पा.सू. ५.४.६९
२२. पा.सू. ५.४.७०
२३. पा.सू. ५.४.७१
२४. पा.सू. ५.४.७२
२५. पा.सू. ५.४.१२४
२६. पा.सू. ५.४.१२७
२७. पा.सू. ५.४.१३२

(४) जायाशब्दे- नीङ् भवति- युवजानिः ।[२८]

एवमेव अन्येषु समासेषु अपि समाश्रिताः विधयः भवन्तीति अवगन्तव्यम्।

अत्र क्रमेण समस्याविधिप्रयोगः कार्यः। अस्मिन् विधौ विचारात्मकचिन्तनस्य आधारतत्त्वानां प्रयोगः व्याकरणाध्यापनाय विधीयते। तदर्थं समस्याविधेः सोपानानि सन्ति तानि यथा- समस्या, समाधानान्वेषणप्रक्रिया, परिकल्पना, समाधानम् चेति।

अत्र समासाध्यापनविधिबिन्दूनां माध्यमेन समस्यासमाधानविधिप्रयोगपूर्वकं शीघ्रतया समासबोधनं कर्तुं शक्यते।

निष्कर्षरूपेण समस्याविधिना अध्यापनेन जटिलसमासस्यादि शीघ्रतयावगमनं शक्यते। छात्रेषु समस्यानिदानविधिना समस्यायाः निराकरणं जायते। कल्पनानां परीक्षणेन छात्राणां ज्ञानं दृढं जायते। यदि बाहुल्येनास्य विधेः प्रयोगः न सम्भवति तर्हि प्रत्येकं शिक्षकेण मासे सप्ताहे एकवारं प्रायोगिकरूपेण अस्य विधेः अध्यापनेऽवश्यं प्रयोगः विधातव्यः । यावत् छात्राः समासान् पुनः अन्वेष्टुम् अवसरं न प्राप्नुवन्ति तावत् तेषां स्थिरसमासज्ञानं न भवति। अतः शिक्षकः समस्यायाःसामञ्जनेन सर्वदा अस्य विधेः प्रयोगं कुर्यात्।

*******

२८. पा.सू. ५.४.१३४

# समासाश्रितपुंवद्भावस्वरूपविमर्शः

**प्रकाशचन्दयादवः**
शोधच्छात्रः

समाससमाश्रित्यपुंवद्भावनिरूपणं भगवतापाणिनिनाष्टाध्याय्यां कैश्चित् सूत्रैः सुनिर्दिष्टं वर्तते। तत्र पुंवद्भावस्य कोऽर्थः ? इति जिज्ञासायां पुंसि इव पुंवद् '**तत्र तस्येव**'[१] इति वतिप्रत्ययः, पुंवद्भवत्यस्मिन्नित्यर्थे 'भू' सत्तायामिति धातोरधिकरणे घञ्प्रत्यये सति पुंवद्भावशब्दस्य निष्पत्तिर्जायते।

अत्र विचार्यते यत् कस्मिन् कस्य वा पुंवद्भाव इत्याशङ्कायां स्त्रीलिङ्गस्य हि पुंवद्भावो दृश्यते। अर्थात् स्त्रीलिङ्गिनो ये शब्दाः सन्ति ते पुंसि परिवर्तन्ते। यद्वा स्त्रीलिङ्गद्योतकटाब्ङीबादिप्रत्ययानां येन विधिना निवृत्तिर्भवति तत् सूत्रं पुंवद्भावविधायकं व्याकरणशास्त्रे प्रसिद्धिं गच्छति। एतादृशेष्वेवान्यतमं सूत्रं वैयाकरणसिद्धान्तकौमुद्यां बहुव्रीहिसमासप्रकरण आदावेव श्रीमद्भट्टोजिदीक्षितेन समुल्लिखितम् - '**स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्** ' '**समानाधिकरणे स्त्रियामपूरणीप्रियादिषु**'[२] सूत्रमेतत् निर्वक्ति यद् स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यादित्यर्थतः एतदागतं यत् सूत्रमेतद् पुंवद्भावविधायकमस्ति। अस्य रूपवद्भार्यः पटुभार्य इत्यादीन्युदाहरणानि कौमुद्यां दृश्यन्ते।

अस्य सूत्रस्य व्याख्यानं भगवता पतञ्जलिनैवमुक्तं यत्-सूत्रेऽस्मिन् भाषितपुंस्कादिति पदं वर्तते। पदमिदं कथं विज्ञायते '**समानायामाकृतौ यद्भाषितपुंस्कमाहोस्वित् क्वचिद् यद् भाषितपुंस्कमि**'ति भाषितः पुमान्यस्मिन्नर्थे प्रवृत्तिनिमित्तलक्षणे स भाषितपुंस्क इति प्रवृत्तिनिमित्तस्यान्यपदार्थत्वाश्रयणे तद्योगाच्च शब्दस्यापि भाषितपुंस्कत्वविज्ञाने समानायामाकृतावित्यर्थो लभ्यते। प्रत्यासत्त्या च यस्य शब्दस्य पुंवद्भावो विधीयते तेनैव पुमान् भाषित इति गृह्यते। भाषितपुंस्कग्रहणसामर्थ्याच्चशब्दान्तरेण सर्वस्यार्थस्य भाषितपुंस्कत्वादन्ततोऽर्थशब्देनापीति व्यवच्छेद्याभावादनर्थकं भाषितपुंस्कग्रहणं स्यात्। यदा तु भाषितः पुंमान् येन शब्देन स भाषितपुंस्क इति शब्दोऽन्यपदार्थ आश्रीयते तदा समानायामाकृतावित्यस्य विशेषस्य लाभो नास्ति। उभयोः पक्षयोः को भेदो वर्तते ? यदि समानायामाकृतौ यद् भाषितपुंस्कमिति पक्षो विज्ञायते तर्हि गर्भिः भार्या यस्य स इति गर्भभार्य

१ 'तत्र तस्येव' पा.सू.५.२.११६
२ 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु' पा.सू.६.३.३४

इत्यत्र स्त्रियां वर्तमानस्य गर्भिशब्दस्यानवयवभूतगर्भसम्बन्धः प्रवृत्तिनिमित्तम् । गर्भी व्रीहिरित्यादौ तु पुंसि वर्तमानस्यावयवभूतगर्भसम्बन्ध इति समानाकृतित्वाभावः । अतः अत्र पुंवद्भावो न प्राप्नोति। एवमेव प्रजातभार्यः प्रसूतभार्यः अत्र प्रजातप्रसूतशब्दौ स्त्रियां वर्तमानौ गर्भविमोचनं प्रवृत्तिनिमित्तमाश्रयतः पुंसि तु गर्भाधानमिति समानाकृतित्वाभावः, अतः अत्रापि तु पुंवद्भावो न प्राप्नोति ।

अथ क्वचिद् यद् भाषितपुंस्कमिति विज्ञायते तदा द्रोणी भार्या यस्य सो द्रोणभार्यः, अत्रापि पुंवद्भावः प्राप्नोति। द्रोणशब्दः परिमाणवृत्तिर्भाषितपुंस्कः, स एव च सादृश्यनिबन्धन-प्रत्यभिज्ञानवशात्तत्त्वनिबन्धनप्रत्यभिज्ञानवशाद्वा भेदेनावसीयमानो गवाद्यन्यं वर्तते इति समानाकृतित्वं नास्ति। एवमेव कुटी भार्या यस्य स इति कुटीभार्यः अत्रापि कुटशब्दो घटे भाषितपुंस्कः, गेहे स्त्रीलिङ्गः। एवं पात्री भार्या यस्य स इति पात्रीभार्यः अत्रापि पात्रशब्दोऽर्धर्चादित्वाद् भाषितपुंस्को भाजनविशेषे स्त्रीलिङ्गः, अतः अनेन प्रकारेणोभयोः पक्षयोः दोषो वर्तते। अस्तु तर्हि समानायामाकृतौ यद् भाषितपुंस्कमिति पक्षोऽयं स्वीकर्तव्यः। पक्षेऽस्मिन्। स्वीकारे सति गर्भिभार्यः प्रजातभार्यः प्रसूतभार्यरित्यत्र कथं पुंवद्भावो भविष्यति ? यतो ह्यत्र दोषाः विद्यन्ते। एतेषां दोषाणां निवृत्त्यर्थमत्र यत्नः कर्तव्यः। गर्भिशब्दस्य गर्भसम्बन्धः प्रवृत्तिनिमित्तं पुंसि स्त्रियाञ्च समानं वर्तते। अवान्तरभेदस्त्वविवक्षितः। प्रसूतप्रजातशब्दयोरपत्यापत्यवत्सम्बन्धः प्रवृत्तिनिमित्तमस्तीति दोषाभावः। अतः अस्माभिः 'समानायामाकृतौ यद् भाषितपुंस्कमि'ति तत् स्वीकर्तव्यम्।

किं पुनरमिदं पुंवद्भावे स्त्रीग्रहणं स्त्रीप्रत्ययग्रहणमाहोस्वित् स्त्रीशब्दस्य ग्रहणमाहोस्वित् स्त्र्यर्थस्य ग्रहणम्? पुंवत् शब्दात् स्त्रीप्रत्ययस्य प्रतिषेधो न विज्ञायते इति स्वीकृत्य प्रश्नोऽयं वर्तते। अन्यस्याचार्यस्य मते पुंवद्भावे चतुर्षु पक्षेषु को भेदो वर्तते? यदा पुंवद्भावे स्त्रीग्रहणं स्त्रीप्रत्ययग्रहणं वा क्रियते चेत् तदा **'पुंवद्भावे स्त्रीग्रहणं स्त्रीप्रत्ययग्रहणं चेत्तत्र पुंवदित्युत्तरपदे तत्प्रतिषेधविज्ञानात्'**[३] इति वार्तिकेन तत्र पुंवदित्युत्तरपदे स्त्रीप्रत्ययस्य प्रतिषेधोऽयं विज्ञायेत। किमुच्यते स्त्रीप्रत्ययस्य प्रतिषेध इति न पुनरन्यदपि किञ्चित् पुंसः प्रतिपदं कार्यमुच्यते यत्समानाधिकरण उत्तरपदे भाषितपुंस्कस्यातिदिश्येत ? इति जिज्ञासायाम् **'अनारम्भात्पुंसि'**[४] इति वार्तिकेन पुंसः प्रतिपदं कार्यं किञ्चिन्नह्युच्यते यत् समानाधिकरण उत्तरपदे भाषितपुंस्कस्यातिदिश्येत। अतः पुंवदित्युक्ते स्त्रीप्रत्ययप्रतिषेधादन्यद् किमप्यर्थं विज्ञातुं न शक्यते। पुनः पुंवदित्यनेन स्त्रीप्रत्ययस्य प्रतिषेधः कथं विज्ञातुं शक्यः? पुंवदिति पुंसि इव इति विग्रहे **'तत्र तस्येव'** इति सूत्रेण सप्तम्यन्तात् वतिप्रत्ययो वर्तते। वतिनिर्देशे वाक्यशेषं समर्थयितुं भावोऽभावो

३ 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्...' पा.सू.६.३.३४ इति सूत्रमहाभाष्यवार्तिकम् ।
४ 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्...' पा.सू.६.३.३४ इति सूत्रमहाभाष्यवार्तिकम् ।

वा बोधे सति कामाचारो भवति। तद्यथा '**उशीनरवन्मद्रेषु यवाः**' इत्युच्यमाने सति सत्तासत्ता वेत्यर्थद्वयस्योपस्थितिर्भवति। सत्तायां तु यदि उशीनरदेशे यवाः सन्ति तर्हि मद्रदेशेऽपि सन्ति। असत्तायां तु यदि उशीनरदेशे यवाः न सन्ति तर्हि मद्रदेशेऽपि न सन्ति। एवमेव '**मातृवदस्याः कला**' इत्युच्यमाने सत्तायां तु यदि मातरि कला विद्यते तर्हि पुत्र्यामपि कला विद्यते। असत्तायां तु यदि मातरि कला नास्ति तर्हि पुत्र्यामपि नास्ति। अत्र वतिप्रत्ययसामर्थ्यात् भावाभावद्वयस्य बोधो भवति। एवं पुंवदिति पदेऽपि सप्तम्यन्तात् वतिप्रत्ययेन पुंवच्छब्दो भवति, पुंवच्छब्दो न भवति इति उभयोरर्थयोः स्थितिरवलोक्यते। यथा पुंसः स्त्रीप्रत्ययो न भवति एवं समानाधिकरण उत्तरपदे परे भाषितपुंस्कस्यापि स्त्रीप्रत्ययो न भवति। भाषितपुंस्कस्यापि इति सम्बन्धे षष्ठी विभक्तिः वर्तते। तस्य स्त्रियामपि स्त्रीप्रत्ययो न भवतीत्यर्थः। तेन जातनिवृत्तिं सूचयति। अत्र '**प्रातिपदिकस्य च प्रत्यापत्तिः**'[५] इत्यापेक्षवार्तिकेन पुंसः जातस्त्रीप्रत्ययस्य निवृत्तौ सत्यामपि प्रातिपदिक इति स्त्रीप्रयुक्तकार्यस्यापत्तिर्भवति । यथा एनी भार्यास्येति एतभार्यः अत्र एतशब्दात् '**वर्णादनुदात्तात्तोपधात्तो नः**'[६] इति ङीप्प्रत्ययः तकारस्य च नकारः। तत्रैकदेशविकृतमनन्यवदिति भाषितपुंस्कादेतशब्दादीकारे पर इति तन्निवृत्तावर्थस्यानिवृत्तत्वान्नकार-श्रवणप्रसङ्गः। '**स्त्रियाम्**'[७] इति सूत्रस्याधिकारे नकारो विहितः, अतः नकारस्य श्रवणापत्तिरस्ति। ननु च '**एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः**'[८] इति परिभाषाबलेन सन्नियोगशिष्टत्वादीकारनिवृत्तौ नकारस्यापि निवृत्तिर्भविष्यति। उत्तरपदनिमित्तत्वादीकारनिवृत्तौ 'अचःपूर्वस्मिन् पूर्वविधौ'[९] इति सूत्रेणात्र स्थानिवद्भावो भवति अतः स्थानिवद्भावेन पुनः नकारस्योन्मज्जनं मन्यते। यदि सन्नियोगशिष्टत्वेन स्थानिवद्भावेनेकारो भविष्यति तर्हि पट्वी भार्यास्येति पटुभार्यः मृद्वी भार्यास्येति मृदुभार्यः इत्यत्रापि सन्नियोगशिष्टद्वारा स्थानिवद्भावेनेकारो भविष्यति, अनेनेकारे परे सति '**इको यणचि**'[१०] इति सूत्रेणात्र यणादेशः प्राप्नोति । अनेन दोषेण सन्नियोगद्वारा स्थानिवद्भावेनेकारो नानेतुं शक्यते।

'**वतण्ड्यादिषु पुंवद्वचनम्**'[११] इति वार्तिकेन स्त्रीग्रहणपक्षे वतण्ड्यादिषु पुंवद्भावो वक्तव्यः। लुगलुगस्त्रीविषयस्त्रीप्रत्ययाः वतण्ड्यादयः सन्ति । एतेषु प्रत्येकमुदाहरणं स्पष्टं करोति । सर्वप्रथमं

---

५ 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्..... 'पा.सू.६.३.३४इति सूत्रमहाभाष्य' वार्तिकम् ।

६ 'वर्णादनुदात्तात्तोपधात्तो नः' पा.सू.४.१.३९

७ 'स्त्रियाम्' पा.सू.५.१.३

८ परिभाषेन्दुशेखरे परिभाषा संख्या१७

९ अचः परस्मिन् पूर्वविधौ पा.सू.१.१.५७

१० इको यणचि पा.सू.६.१.७७

११ 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्....' पा.सू.६.३.३४इति सूत्रमहाभाष्य' वार्तिकम् ।।

लुक् गार्ग्यो वृन्दारिकाः येषां ते गर्गवृन्दारिकाः अत्र गर्गस्यापत्यमित्यर्थे '**गर्गादिभ्यो यञ्**'[१२] इति सूत्रद्वारा यञ्प्रत्ययेन गार्गी सिद्ध्यति। अस्य बहुवचने गार्ग्य इति रूपं भवति । अत्र समासे पुंवद्भावेन स्त्रीप्रत्ययस्य निवृत्तिर्भवति, स्त्रीप्रत्ययस्य निवृत्तौ तस्यार्थः स्त्रीत्वन्निवृत्तो नास्ति पुनरत्र यञ्प्रत्ययस्य श्रवणन्न भवति यतो ह्यत्र बहुवचने '**यञञोश्च**'[१३] इति सूत्रेण यञ्प्रत्ययस्य लुक् भवति, तत् स्त्रियां लुक् नोच्यते। अलुक्– वतण्डी वृन्दारिका वातण्डयवृन्दारिका अत्रापि समासे पुंवद्भावेन स्त्रीप्रत्ययस्य निवृत्तिर्भवति। अत्र स्त्रीप्रत्ययस्य निवृतौ तस्य स्त्रीत्वमर्थः निवृत्तिः नास्ति, अतः तस्यानिवृत्तत्वात् '**लुक्स्त्रियाम्**'[१४] इत्यनेन चेदीकारे परतो लुग्विधीयते तदेकारे पुंवद्भावेन निवर्तिते यकारनिवृत्तौ कर्तव्यायां '**स्थानिवत्प्रसङ्गश्च**'[१५] इति वार्तिकेन स्थानिवद्भावे प्रतिषिद्धे वातण्ड्यवृन्दारिका इति सिद्ध्यतीति भावः। **अस्त्रीविषय**– कौण्डीवृसी वृन्दारिका कौण्डीवृस्यवृन्दारिका अत्र पुंवद्भावेन स्त्रीप्रत्ययस्य निवृत्तिर्भवति, स्त्रीप्रत्ययस्य निवृत्तौ स्त्रीत्वमर्थोऽनिवृत्तोऽस्ति स्त्रीत्वस्यानिवृत्तत्वात् '**व्रातच्फञोरस्त्रियामि**'[१६] ति फञो न प्राप्नोति। **द्विस्त्रीविषय**– गार्ग्यायणी वृन्दारिका गार्ग्यवृन्दारिकाः अत्र पुंवद्भावो न प्राप्नोति, यतोहि भाषितपुंस्कादनूङः समानाधिकरणे उत्तरपदे पुंवद्भावो भवतीत्युच्यते। यश्चात्र भाषितपुंस्कात् परं नैतदुत्तरपदे, यच्चोत्तरपदे न तद्भाषितपुंस्कात् परं गार्ग्यायणी अत्र ष्फस्योत्तरपदेनानन्तर्याभावात् पुंवद्भावेन निवृत्तिः न प्राप्नोति, अतः स्त्रीग्रहणे दोषाः सन्ति।

अस्तु तर्हि स्त्रीशब्दग्रहणम्। स्त्रीशब्दस्य पुंशब्दातिदेश इति सर्वस्य स्त्रीशब्दस्य पुंशब्दातिदेशः प्राप्नोति। अस्य प्राप्नोति– अङ्गारका नाम शकुनयः तेषां कालिकाः स्त्रियः, कालिकावृन्दारिकाः इत्यस्याङ्गारकवृन्दारिकाः प्राप्नुवन्ति। अङ्गारकशब्देन न कदाचित् स्त्रियामभिधानं, कालिकाशब्देन च पक्षिजातौ तस्याः स्त्रियाः एवाभिधानमिति पुंवत्कर्मधारयेत्यनेनार्थतः आन्तर्यादङ्गारकशब्दादेशप्रसङ्गः। कालिका अङ्गारकशब्देन साहचर्यादभिधातुं हि शक्यन्ते। एवमेव क्षेमवृद्धयः क्षत्रियाः तेषां तनुकेश्यः स्त्रियः, तनुकेशीवृन्दारिकाः इत्यस्य क्षेमवृद्धिवृन्दारिकाः प्राप्नुवन्ति, हंसस्य वरटा , कच्छपस्य डुली, ऋश्यस्य रोहित् , अश्वस्य वडवा, पुरुषस्य योषित् च इत्यत्र उत्तरपदे परे सर्वस्य निवृत्तिप्रसङ्गो भवति। अस्याविशेषादिति कारणं वर्तते। कश्चिद्विशेषः न हि उपादीयते एवंजातीयकस्य स्त्रीशब्दस्य पुंशब्दातिदेशो भवतीति। अनुपादीयमाने हि विशेषे सर्वप्रसङ्गो वर्तते । कथं च नाम नोपादीयते

१२ 'गर्गादिभ्यो यञ्' पा.सू.४.१.१०५

१३ 'यञञोश्च' पा.सू.२.४.६४

१४ 'लुक्स्त्रियाम्' पा.सू.४.१.१०९

१५ 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्.' पा.सू.६.३.३४इति सूत्रमहाभाष्य' वार्तिकम् ।

१६ 'व्रातच्फञोरस्त्रियाम्' पा.सू.५.३.११३

# समासवृत्तिविमर्शः

**सर्वेश कुमार तिवारी**
शोधच्छात्रः व्याकरणविभागः
(रा.सं.सं.भोपालपरिसरः)

विषयेऽस्मिन् समासवृत्तिपदेन कोऽभिप्रायः ? कश्च समासः ? इति प्रथमं तावद् विचार्यते। यतोहि उपस्थितं परित्यज्य अनुपस्थितकल्पने मानाभावः। पदेऽस्मिन् द्विधा समासः कर्तुं शक्यन्ते। प्रथमः – समासश्चासौ वृत्तिश्च समासवृत्तिः कर्मधारयः। द्वितीयः – समासे वृत्तिः समासवृत्तिः सप्तमीतत्पुरुषः। कर्मधारये वृत्तिपदं पदार्थान्वितस्वार्थोपस्थापकत्वरूपार्थकस्य बोधकम्। तेन पञ्चविधासु कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपासु अन्यतमा इयं समासवृत्तिः। अत्र समासत्वन्तु संकेतविशेषसम्बन्धेन समास पदवत्त्वम्, एकार्थीभावापन्नपदसमुदायविशेषो वा।

सप्तमीतत्पुरुषे तु वृत्तिपदेन जहत्स्वार्थाऽजहत्सवार्थारूपवृत्तिद्वयम् अवगन्तव्यः। तत्र किन्नाम जहस्त्वार्था आहोस्विदजहत्स्वार्था ? 'जहति = त्यजन्ति, स्वानि = पदानि, यं सः जहत्स्वः = अर्थः, स्व = पदकर्तृकत्यागकर्मीभूतोऽर्थः। जहत्स्वः अर्थो यस्यां सा जहत्स्वार्था'।[१] अत्र स्वशब्दः आत्मीयपरः, अर्थस्य आत्मीयञ्च पदमेव इति बोध्यम्। अत्र व्याधिकरणपदो बहुब्रीहिः। ईदृशः शत्रन्तपूर्वपदकः तत्कर्मवाचकोत्तरपदकः समासो वेदेषु प्रसिद्धः।[२] अयमेव एकार्थीभावः जहत्स्वार्थाऽपरपर्यायः।

**प्रथमाया अयम्भावः** – जहत्स्वार्थावृत्तिस्वीकारादेव 'राजपुरुष' इति समस्तपदेन राजविशिष्टपुरुषभान–सम्भवः। यतोहि समुदाये एका विशिष्टा शक्तितिष्ठति। अतः अवयवशक्तिमादाय न पृथक्राजपुरुषपदयोः तत्तदर्थबोधकं कल्प्यम्। यथा– वृषशब्दो वृषभशब्दश्च बलीवर्दे प्रसिद्धौ। एवमेव यावशब्दो यावकशब्दश्च चरणरञ्चकद्रव्ये शक्तौ। तत्र यदा वृषभशब्दः प्रयुज्यते तदान तद्घटके वृषशब्दे वाचकत्वं गृह्यते किन्तु 'वृषभ' इति समुदाये एव। एवं यावकशब्देऽपि बोध्यम्। अन्यथा अवयवशक्तिस्वीकारे राजपदेन विग्रहवाक्य इव राज्ञः

१. परमलघुमञ्जूषा टीका/व्याख्या, जयशंकर लाल त्रिपाठी
२. वै.भूषणसारः (समासशक्तिः) व्याख्याकारः – दीनबन्धु झा

स्वातन्त्र्येणोपस्थितिसत्त्वाद् 'ऋद्धस्य राज्ञः पुरुष' इति वाक्यस्येव 'ऋद्धस्य राजपुरुषः' इत्यस्याप्यापत्तेः। यतोहि 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन'[३] इत्यभियुक्तोक्तेः राजपदार्थेन सह 'ऋद्धस्यैति विशेषणस्योपयोगः। न ह्यत्र पदार्थपदेन पदजन्यप्रतीतिविषयत्वं ग्राह्यम् अपितु पदजन्यप्रतीतिविशेष्यत्वमेव। अन्यथा 'नित्यो घटः' इति प्रयोगापत्तिः स्यात्। न चैव देवदत्तस्य गुरुकुलमित्यादावपि अनन्वयापत्तिः, तत्रापि देवदत्तोत्तरषष्ठ्यर्थस्य गुरुणान्वयादिति वाच्यम्। देवदत्तस्य प्रधानीभूतकुलेनैवान्वयात्। सम्बन्धस्तु गुरुद्वारक एव। उक्तमपि– 'समुदायेन सम्बन्धो येषां गुरुकूलादिनाम्। संस्पृश्यावयवांस्ते युज्यन्ते तद्वातासहा।। यद्वा ससम्बन्धिपदार्थस्यैकदेशत्वेऽपि भवति विशेषणान्वयः।'[४] उक्तञ्च–

**सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते।**
**वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते।।**[५]

नन्वेवं राज्ञोऽपि नित्यसापेक्षात्वादेकदेशत्वेऽपि ऋद्धस्येति विशेषणे–नान्वयोऽस्तु। मैवम् राज्ञ ईशितुरीयशितव्यं प्रति साकाङ्क्षत्वेऽपि ऋद्धं प्रति अनाकाङ्क्षत्वात्।

**अजहत्स्वार्था** – न जहति = त्यजन्ति, स्वानि = पदानि यमर्थं सोऽजहत्स्वः = अर्थः, अजहत्वः अर्थो यस्यां सा अजहत्स्वार्था। अवयवार्थसंवलितसमुदायार्थबोधिकेति। अस्या अपरं नाम व्यपेक्षेति। एवञ्च स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादिवशात् परस्परान्वयो व्यपेक्षेति फलति। अस्यां वृत्तौ राजपुरुषादिसमासे अतिरिक्ता एकार्थीभावरूपा शक्तिः नैव कल्पनीया भवति प्रमाणाभावात्। अपि च क्लृप्तराजादिपदादेव अर्थोपस्थितिसम्भवे पृथक्शक्तिकल्पनस्य गौरवग्रस्तत्वाच्च। न चात्र मते 'राजपुरुष' इत्यत्र पृथक्पदार्थोपस्थितिसम्बवे ऋद्धस्येति विशेषणान्वयापत्तिः, 'सविशेषणानां वृत्तिर्न, वृत्तस्य विशेषणयोगो न'[६] इति वार्तिकात्। तथा च एतन्मतवादिनां मते पूर्वोत्तरपदार्थसत्त्वात् 'पूर्वपदार्थप्रधानोऽव्ययीभावः', 'उत्तरपदार्थप्रधानस्तत्पुरुषः' इत्यादिव्यवस्था सूपपादा भवति।

समासे समुदाये वा विशिष्टशक्त्यस्वीकारे तस्यार्थवत्त्वाभावात् कथं प्रातिपदिकत्वम्? अपि चावयवानामर्थतत्त्वे समुदायोऽपि भवत्यर्थवान् इति नैव वक्तुं शक्यते। यतोहि भाष्ये 'अर्थवदिति किम् अर्थवतां समुदायः, अर्थवाँश्च समुदायः' इति द्विधा समासं प्रदर्श्य महाभाष्यकृत् अग्रे आह– 'अर्थवतां समुदायोऽनर्थकः–दश दाडिमानि षडपूपाः कुण्डमजाऽजिनम्'।[७] अर्थात्

३. व्युत्पत्तिवादः, प्रथमाविभक्तिः
४. वै.सि.कौमुदी (समर्थः पदविधिः) टीका–तत्त्वबोधिनी
५. तदेव
६. पा.सू. २.१.१, वार्तिकम्
७. महाभाष्यम्, अर्थवत्सूत्रस्थम् १.२.४५

पदानां सार्थक्येऽपि समुदायस्य निराकाङ्क्षाबोधजनकत्वाभावात् न सार्थक्यम्। न च 'कृत्तद्धितसमासाश्च'[८] इति सूत्रघटकसमासेनैव तत्संज्ञा वाच्या। तत्र समासग्रहणस्य नियमार्थत्वं प्रत्यपादि भाष्यकृता। अन्यथासिद्धिं विना नियमायोगात्। अत एव राज्ञः पुरुषो देवदत्त पचतीत्यादिवाक्यस्य न प्रातिपदिकत्वम्। एतावता समुदाये समासे वा जहत्स्वार्थाऽपरपर्यायरूपः एकार्थीभावः स्वीकर्तव्यः। तेन प्रातिपदिकसंज्ञाऽपि सुलभा। लक्षणाश्रयणमपि न कर्तव्यं भवति। एतत्सर्वं मनसि निधाय कौण्डभट्टः मूले आह भूषणसारस्य-

**समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्।।**
**बहूनां वृत्तिधर्माणां वचनैरेव साधने।**
**स्यान्महद्गौरवं तस्मादेकार्थीभाव आश्रितः।।**[९]

अत्र समासः वृत्तिमात्रस्योपलक्षकः। तेन कृत्तद्धितसमासैकशेषसनाद्यन्त-धातुरूपेतिपञ्चस्वपि वृत्तिषु अवयवशक्तिव्यतिरेकैव एकार्थीभावापरपर्याया जहत्स्वार्थाख्या शक्तिः स्वीकृता वैयाकरणैः। विशिष्टशक्त्यस्वीकर्तॄणां नैयायिककादीनां व्यपेक्षावादिनां मतं इण्यति-इत्याशयेनाह- पङ्कजशब्दवत्। अत्र हि पद्मत्वेन रूपेण बोधाय समुदायेऽतिरिक्ता शक्तिः स्वीक्रियते सर्वैः। अत एवोदाहरणरूपेण प्रदत्तमिति। ननु एकार्थीभावे पङ्कजपदे पङ्कजनिकर्तृकपद्मस्य बोधः आहोस्वित् 'पद्म' इत्यस्यैव बोधः। यत्र रुढिर्योगस्य विरोधिनी भवति तत्रैवावयवार्थस्य परित्यागाज्जहत्स्वार्थाऽङ्गीक्रियते। उक्तञ्च-

**'जहत्स्वार्था तु तत्रैव यत्र रुढिविरोधनी'**

एतावता अत्र वरोिधाभावान्नावयवार्थत्यागः।

ननु 'सरसि पङ्कजं विकसति' इत्यादौ पङ्कजाततृणकीटादौ विकसन-क्रियान्वयबाधाल्लक्षणया पद्मत्वरूपोऽर्थः शक्यते बोधयितुम्, तेन माऽस्तु विशिष्टा शक्तिः, इति नैव वक्तुं शक्यते यतोहि 'वर्षासु रथकारोऽग्निमादधीत' इत्यत्र रथनिर्मातुब्राह्मणस्यापि अग्न्याधानक्रियायामन्वयसम्भवात् मुख्यार्थबाधाभावेन नास्ति लक्षणाया अवसरः। तथा च रथकारपदेन जातिविशेषस्य बोधानापत्तिः। अतोऽतिरिक्ता शक्तिः कल्पनीयैव।

समासे विशिष्टशक्तिसाधने साधकान्तररूपेणाह कौण्डभट्टः- बहूनां वृतेधर्माणां विशेषणलिङ्गसंख्याद्ययोगादीनां वचनैरेव साधने व्यपेक्षावादिनां नैयायिकानां मते गौरवम्। अत्रत्योऽयसम्भावः- विशिष्टशक्तिस्वीकर्तॄणां वैयाकरणानां मते राजपुरुषघटके-'राज्ञि' इत्यत्र

८. पा. सू. १.२.४६
९. वै.भू.सा.कारिका ३१-३२

ऋद्धस्येति न विशेषणान्वयः, यतोहि वृत्त्या उपस्थिते पदार्थे एव विशेषाणान्वय न तु तदेकदेशे' इति व्युत्पत्त्यैव समाधानम्। व्युत्पत्तिरियं सर्वैरभ्युपगता। किन्तु विशिष्टशक्त्यस्वीकर्तृणां नैयायिकानां मते 'सविशेषणानां वृत्तिर्न वृत्तस्य विशेषणपयोगो न'[१०] इति वार्तिकमावाश्यकं ऋद्धस्येति विशेषणान्वयवारणाय। अस्माकं मते तु न्यायसिद्धमेवेदं वचनं नापूर्वकल्पनम्।

एवमेव व्यपेक्षावादिनां मते 'विभाषा'[११] इति सूत्रमावश्यकम् वाक्यस्य कृते। किन्तु विशिष्टशक्तिवादिनां मते न्यायसिद्धम् अनुवादकथनम् वा। तथाहि – व्यपेक्षाविवक्षायां विग्रहवाक्यम्, राज्ञः पुरुष इति। एकार्थी भावे समासः राजपुरुष इति स्वभावतः प्रयोगद्वयं सम्भवति। अत एव 'विभाषा'[१२] इति सूत्रं प्रत्याख्यातं भाष्ये। व्यपेक्षामात्रस्वीकारे तु तत्सूत्रमावश्यकमेव भवेत्।

अपि च विशिष्टशक्त्यस्वीकारे 'धवखदिरौ' इत्यत्र इतरेतरयोगो वचनेन साध्यः। ननु 'चार्थे द्वन्द्वः'[१३] इति सूत्रे चार्थग्रहणं कृतमेव। वचनेन किम्? अत्र चार्थो हि द्वन्द्वसमासे निमित्ततया आश्रीयते न तु अर्थादेशनाय, अर्थस्य तु समासशक्त्यैव प्रतीतिः। तव तु तदभावे वचनकल्पनम्। एवमेव निष्कौशाम्बिः, गोरथः, 'घृतघटः', 'गुडधानाः' इत्यादावतिक्रान्तयुक्त-पूर्ण-मिश्राद्यर्थो वाचनिको वाच्य इत्यतिगौरवं स्यादिति।

अथ च इतरेतरयोगबोधाय यथा- घटश्च पटश्च इति विग्रहवाक्ये च इति निपातः प्रयुज्यते तथैव 'घटपटौ च' इत्यपि प्रयोग आपद्येत। तद्वारणाय 'द्वन्द्वे च लोपः' इत्याकारकवनकल्पनं कर्तव्यं भविष्यति विशिष्टशक्त्यस्वीकर्तृणां मते। उक्तमपि भूषणकारैः –

**चकारादिनिषेधोऽप्य बहुव्युत्पत्तिभञ्जनम्।**
**कर्तव्यं ते न्यायसिद्धमस्माकं तदितिस्थितिः।।**[१४]

अत्र बहुव्युत्पत्तिभञ्जनेनायमभिप्रायः- अषष्ठ्यर्थबहुब्रीहौ प्राप्तोदकपदेन ग्रामस्य प्रतीतिर्नैव सम्भवति। प्राप्तोदकघटके 'प्राप्त' इत्यत्र प्रपूर्वकाप्धातोः कर्तरि क्तप्रत्ययः। तस्य प्राप्तपदार्थस्य कर्त्रा उदकेन सहाभेदान्वयः। तेन 'उदककर्तृकप्राप्तिकर्मीभूतो ग्रामः' बोधोऽयम् इष्टः। किन्तु स बोधो विशिष्टशक्त्यस्वीकर्तृमते लक्षणयाऽपि न सम्भवति। तथाहि- 'प्राप्तोदक' इति पदेन 'प्राप्तिकर्त्रभिन्नम् उदकम्' इति बोधे जाते 'शक्यसम्बन्धो हि लक्षणा'[१५] इति धिया उदकपदे

१०. पा. सू. २.१.१ वार्तिकम्
११. पा. सू. २.१.११
१२. तदेव
१३. पा. सू. २.२.२९
१४. वै.भू.सा. का. ३३
१५. प.ल.म. (लक्षणाप्रकरणे)

लक्षणायाम् उदकसम्बन्धी ग्राम इति बोधो जातः। किन्त्वत्र उदकस्य ग्रामे अन्वितत्वात् प्राप्तिक्रियायामन्वयाभावात् 'उदककर्तृकप्राप्तिकर्मीभूतो ग्रामः' इतीष्टबोधो न जातः। अपि च क्तप्रत्ययस्य कर्तृरूपार्थकस्य कर्मणि लक्षणायाम् उदककर्तृकप्राप्तिकर्म ग्रामः इत्याकारके इष्टे बोधे जातेऽपि 'समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयः' इति व्युत्पत्तेः भञ्जनं गले पतितम्, तेन महद्गौरवम्। एतावता 'पक्षोऽयं महान् गौरवग्रस्तः' इति निःसङ्कोचेन डिमडिमघोषसहितेन कथितुं शक्यते।

अतः समासे एकार्थीभावापरपर्याया जहत्स्वार्थावृत्तिराश्रयणीया। एतदेव विचिन्त्य कौण्डभट्टैः मूले भणितम् – स्यान्महद्गौरवमं तस्मादेकार्थीभाव आश्रितः।।[१६]

एवमेव भाष्येऽपि 'अथतस्मिन् व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेषः स वक्तव्यः'[१७] भगवत्पादैरुक्तम्।

****

१६. वै.भू.सा. का (३२ उत्तरार्द्ध)

१७. महाभाष्यम् २.१.१

# वैयाकरणभूषणसारदिशा समासभेदविमर्शः

**प्रज्ञा**
शोधच्छात्रा

व्याकरणशास्त्रस्यासाधारणं प्रयोजनं शब्दानुशासनम् भवति। तदुक्तं भाष्यकारेणादौ महाभाष्ये– 'अथ शब्दानुशासनम्'[१] इति। पुनश्चास्य 'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्'[२] इत्युक्तं तत्रैव। किन्त्वेतेषु प्रयोजनेषु लौकिकं प्रयोजनं विचारयामश्चेद् व्याकरणशास्त्रस्य 'लघूपायैः महतो महतः शुद्धशब्दसमूहस्य परिज्ञानम्' एव व्याकरणस्य परमं प्रयोजनं भवति। लघुशब्दैः स्वाभिप्रायस्य प्रकटनं संस्कृतवाङ्मयस्यापि परमं वैशिष्ट्यं भवति। अत एव च लाघवाय समासविधानमतीवोपयुज्यते। अतः अस्त्यस्य समासस्यास्मिन् व्याकरणशास्त्रे अत्यन्तं महत्त्वपूर्णं स्थानम्।

**समासः –**

सम्–इत्युपसर्गपूर्वकात् 'असु क्षेपणे' इत्यस्मात् धातोः भावे घञ्प्रत्यये कृते सति 'अत उपधायाः'[३] इत्यनेन उपधावृद्धौ च समासशब्दः निष्पद्यते। तत्र 'समसनम् एकीभवनं वा समासः' इति। अर्थात् यदा अनेकानि पदानि मिलित्वा विशिष्टैकार्थस्य प्रतिपादनं कुर्वन्ति तदा समासः इत्युच्यते।

समासः पञ्चसु वृत्तिषु आगच्छति। कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयो भवन्ति। 'परार्थाभिधानं वृत्तिः'[४] इत्युक्तं वृत्तिविषये वैयाकरणसिद्धान्तकौमुद्यां श्रीदीक्षितेन। विग्रहवाक्यावयवपदार्थेभ्यः परोऽन्यः योऽयं विशिष्टैकार्थः तत्प्रतिपादिका वृत्तिरित्यर्थो वर्तते 'परार्थाभिधानं वृत्तिः' इति कथनस्य। तथा च वृत्त्यर्थावबोधकं वाक्यं विग्रहवाक्यम्। विग्रहश्च द्विविधो भवति–लौकिकोऽलौकिकश्च। तत्र परिनिष्ठितत्वात्– व्याकरणसंस्कारयुक्तत्वात् साधुर्लौकिकः। प्रयोगानर्हः= व्याकरणसंस्कारहीनोऽसाधुरलौकिकः। यथा–राजपुरुष इत्यस्य 'राज्ञःपुरुषः' इति लौकिको विग्रहो वर्तते। 'राजन् ङस् पुरुष सु' इत्यलौकिकश्च विग्रहो वर्तते। एवञ्च बहूनां पदानां मिलित्वैकपदीभवनं समासो भवति। नित्यसमासो हि अविग्रहः

१ म.भा.आ.१
२ म.भा.आ.१
३ पा.सू.७.२.११६
४ वै. सि. कौ.पृ.सं.२०९

=लौकिकविग्रहवाक्यरहितः, अस्वपदविग्रहः = समस्यमानपदसमानार्थक- पदान्तरकृतविग्रहो वा भवति। अन्येन पदेन विग्रहः अन्येन पदेन समास इत्यस्वपदविग्रहो भवति। यथा-कृष्णस्य समीपम् उपकृष्णमिति। अत्र समीपशब्देन विग्रहः उपशब्देन सह समास इति कृत्वा नित्यसमासः। अव्ययीभाव-तत्पुरुष-बहुव्रीहि-द्वन्द्वभेदैः समासश्चतुर्विधः। तत्पुरुषभेदः कर्मधारयः। कर्मधारयभेदो द्विगुः। तत्र पूर्वपदार्थप्रधानोऽव्ययीभावः, उत्तरपदार्थप्रधानस्तत्पुरुषः, अन्यपदार्थप्रधानो बहुव्रीहिः, उभयपदार्थप्रधानो द्वन्द्वः इत्यपि लक्षणं वैयाकरणसिद्धान्तकौमुद्यादिषु स्थितं प्रायिकमेव, सूपप्रति, उन्मत्तगङ्गम् इत्याद्यव्ययीभावे पूर्वपदार्थस्य प्राधान्याभावात्, अतिमालादौ तत्पुरुषे उत्तरपदार्थस्य प्राधान्याभावात्। द्वित्राःइत्यादिबहुव्रीहौ अन्यपदार्थ-प्राधान्याभावात्, दन्तोष्ठम् इत्यादिद्वन्द्वे उभयपदार्थस्य प्राधान्याभावाच्च।

उपर्युक्तदोषान् वीक्ष्य समासशक्ति निर्णयावसरे श्रीमता कौण्डभट्टेन समासस्य षड्विधत्वं प्रतिपादितमस्ति। तथाहि-

**'सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा।**
**सुबन्तेनेति च ज्ञेयः समासः षड्विधो बुधैः।।'**[5]

तत्र सुपां सुपेति प्रथमः, सुपां तिङेति द्वितीयः, सुपां नाम्नेति तृतीयः, सुपां धातुनेति चतुर्थः। एते चत्वारः समासाः सुबन्तपूर्वपदकाः भवन्ति। तिङां तिङेति पञ्चमः। तिङां सुबन्तेनेति षष्ठ एतौ द्वौ समासौ तिङन्तपूर्वपदकौ वर्तेते।

**१. सुपां सुपा**- सुबन्तस्य सुबन्तेन सह समासो यत्र भवति सोऽयं समासः सुपां सुपेति। यथा 'राज्ञः पुरुषः' इति लौकिकविग्रहे, 'राजन् ङस् पुरुष सु' इत्यलौकिकविग्रहे कृते 'षष्ठी' इति सूत्रेण समासे च कृते ''राजपुरुषः'' इति पदं निष्पन्नं भवति। सुबन्तस्य सुबन्तेन सह समासविधायकानि अनेकानि सूत्राणि भवन्ति। तद्यथा- तृतीया तत्कृतार्थेन गुणवचनेन[6], अनेकमन्यपदार्थे[7], चार्थे द्वन्द्वः[8] इत्यादीनि।अस्मिन् समासे पदद्वयमपि सुबन्तं भवति।

**२. सुपां तिङा**- यस्मिन् समासे पूर्वपदं सुबन्तम् उत्तरपदं च तिङ न्तं भवति सः सुपां तिङे ति द्वितीयः समासो भवति। यथा-परि+अभूषयत् =पर्यभूषयत्, अनु+वि+अचलत् = अनुव्यचलत्। अत्रहि 'गतिमतोदात्तवता तिङापि समासः'[9] इति वार्तिकेन समासो भवति। अत्र 'परि' इति सुबन्तम्, 'अभूषयत्' इति तिङन्तञ्चास्ति। एवम् 'अनुव्यचलत्' इत्यत्र 'अनु, वि' इति सुबन्तम्, 'अचलत्' इति तिङ न्तञ्चास्ति। 'सह सुपेति' योगविभागस्यापि उपलक्षणमिदम्।

५ वै.भू.सा.; का.२८, वै. सि. कौ.पृ.सं.२०९, श.कौ. पा.सू.२.१.४
६ पा.सू.२.१.३०
७ पा.सू.२.२.२४
८ पा.सू.२.२.९
९ म. भा. वार्त्तिकम् २.२.१८

**३. सुपां नाम्ना**– अस्मिन्समासे पूर्वपदं सुबन्तमुत्तरपदं च नाम– प्रातिपदिकम्, भवति। यथा– ''कुम्भं करोति'' इति लौकिकविग्रहे ''कुम्भङ स् कार'' इत्यलौकिकविग्रहे ''उपपदमतिङ्''[१०] इति सूत्रोण समासे ''कुम्भकारः'' इति रूपं सिद्ध्यति। अत्र हि ''गतिकारकोपपदानां कृदभिः सह समासवचनं प्राक्सुबुत्पत्ते'[११] रिति परिभाषया उत्तरपदात् सुबुत्पत्तेः पूर्वमेव समासो भवति। गतिसंज्ञकस्य कारकस्य उपपदस्य च कृदन्तैः सह सुबुत्पत्तेः पूर्वमेव समासो भवतीति परिभाषार्थः। अनया परिभाषया उत्तरपदे सुबुत्पत्तेः प्रागेव समासो भवतीति नियमः कृतः, न तु पूर्वपदे सुबुत्पत्तेः प्रागेव समासो भवतीति नियमः ।तेन पूर्वपदं सुबन्तं भवत्येव। एवं 'प्रत्ययलापे प्रत्ययलक्षणम्'[११] इति सूत्रेण प्रत्ययलक्षणत्वात् पदत्वाच्च 'चर्मन् क्रीती' इत्यवस्थायां नलोपः सिद्धो भवति। अन्यथा= पूर्वपदेऽपि सुबुत्पत्तेः प्राक्समासाभ्युपगमे ''चर्मन्'' इति पूर्वपदस्य पदत्वाभावात् 'नलोपः प्रातिपदिकान्तस्य' इति सूत्रेण नलोपो न स्यात्। अतः सुबन्तस्य नाम्ना सह समासः तृतीयः। वस्तुतस्तु सुबुत्पत्तेः पश्चात् समासे हि ''चर्मक्रीती'' इत्यत्र ''क्रीतात्करणपूर्वात्'' इति सूत्रेण ङीष्प्रत्ययो न स्यादित्यनुपपत्तिः। तथा हि– 'स्वार्थ=द्रव्य–लिङ्ग–संख्या–कारकाणां क्रमिकत्वनियमः' इति 'कुत्सिते'[१३] इति सूत्रभाष्ये महाभाष्यकारेणोक्तमपि। अयं च नियमोऽन्तरङ्गबहिरङ्गभावमूलकोऽस्ति। यदि सुबुत्पत्त्यनन्तरं समासः स्यात्तदा सुबुत्पत्तेः पूर्वमन्तरङ्गत्वात्, टापि प्रत्यये सति अनदन्तत्वाच्च ''क्रीतात्करणपूर्वात्'' इति सूत्रेण ङीषोऽनुपपत्तिः।

**४. सुपां धातुना**– अस्मिन् समासे पूर्वपदं सुबन्तमुत्तरपदं च धातुमात्राम्। यथा–कटप्रूः, आयतस्तूः, इति च। अत्र ''क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्धश्च''[१५] इति वार्तिकेन समासो धातोरुकारस्य दीर्धश्च कृतो भवति।

**५. तिङां तिङा**– तिङन्तस्य तिङन्तेन सह समासः। अत्र पदद्वयमपि तिङन्तम्। यथा– पिबतखादता, खादतमोदतेति। अत्र मयूरव्यंसकाद्यन्तर्गणपठितेन 'आख्यातमाख्यातेन क्रियासातत्ये'[१६] इति वार्तिकेन समासो भवति। ''क्रियासातत्ये गम्ये तिङन्तं तिङन्तेन सह समस्यते स तत्पुरुषः'' इत्यर्थो भवति ।

**६. तिङां सुबन्तेनेति**– समासेऽस्मिन् पूर्वदं तिङन्तमुत्तरपदं च सुबन्तं भवति। तिङन्तस्य सुबन्तेन

१० पा.सू २.२.२१
११ परि.सं. ७६
१२ पा.सू.१.१.६२
१३ पा.सू. ५.३.७४
१४ वै. सि. कौ.पृ.सं.५१५
१५ वै. सि. कौ.पृ.सं.१७९
१६ श.कौ.पा.सू २.१.४– षोढा चायं समासः-----।

सह समास इति। यथा- जहिस्तम्बः। अत्र मयूरव्यंसकाद्यन्तर्गणपठितेन ''जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति' इति वार्तिकेन समासो भवति। वार्तिकार्थः-'जहित्येतत्कर्मणा बहुलं समस्यते आभीक्षण्ये गम्ये, समासेन चेत् कर्ता अभिधीयते' जहिस्तम्बम्, जहिस्तम्बमिति य आह स जहिस्तम्बः इति। अत्र जहीति तिङन्तं स्तम्बमिति सुबन्तं पदम्।

अयं षड्विधोऽपि समासः 'सह सुपा' इत्यत्र शब्दकौस्तुभे साधितः। 'सह सुपा' इति योगविभागेन भाष्ये व्युत्पादितः। यद्यपि महाभाष्ये स्पष्टतया तत्र समासस्य षड्विधत्वं नोक्तमस्ति तथापि तत्र- 'एवम् तर्हि सिद्धे सति यत् सहग्रहणम् करोति तस्यैतत् प्रयोजनम् योगाङ्गम् यथा विज्ञायेत। (योगाङ्गम्- योगावयव इत्यर्थः)सति च योगाङ्गे योगविभागः करिष्यते। सह, सह सुप् समस्यते। केन सह। समर्थेन। अनुव्याचलत् अनुप्राविशत्। ततः- सुपा। सुपा च सह सुप् समस्यते। अधिकारः च लक्षणम् च । यस्य समासस्य अन्यत् लक्षणम् नास्ति, इदं तस्य लक्षणं भविष्यति इति।[17] अत्र यस्य समासस्य अन्यत् लक्षणम् नास्ति, इदं तस्य लक्षणं भविष्यति इति कथनेन अत्र षड्विधानां समासानां ग्रहणं बोध्यम्।

भट्टोजिदीक्षितेन वैयाकरणसिद्धान्तकौमुद्यां सन्धिसुबन्तनिर्वचनानन्तरं कारकप्रकरणे अर्थविशेषं निरूप्य तदाश्रितसमासनिरूपणं कृतम्। तत्र च चतुर्विध एव प्रकरणविभागोऽङ्गीकृतः वर्तते। ते च अव्ययीभाव-तत्पुरुष-बहुव्रीहि-द्वन्द्वाख्याः विभागाः। किन्तु तत्रैव सर्वसमासशेषप्रकरणे ते विभागाः प्रायोवादरूपोण एभिः स्वीकृताः। तथाहि- समासश्चतुर्विध इति तु प्रायोवादः। अव्ययीभाव-तत्पुरुष-बहुव्रीहि-द्वन्द्वाधिकारबहिर्भूतानामपि- 'सह सुपा' इति समासविधानात्।[18] अत एभिरत्रापि 'सुपां सुपे'ति कारिकाव्याख्यानव्याजेन समासस्य षड्विधत्वं स्वीकृतम्।

समासशक्तिनिर्णये वैयाकरणभूषणसारेऽपि समासस्य चातुर्विध्यमपिप्रायोवादतया प्रतिपादितमस्ति। अव्ययीभावतत्पुरुषद्वन्द्वबहुव्रीहिभेदात् समासश्चतुर्विध इत्ययं प्रायोवादः- बाहुल्याभिप्रयेण भवति। यतो हि- 'भूतपूर्वः'' ''वागर्थाविव'' इत्यादौ समासो वर्तते, परन्तु अव्ययीभावादिविशेषसंज्ञाभिर्नाभिधीयते। अतश्चातुर्विध्यं प्रायिकमेव।

एवमेव पूर्वपदार्थप्रधानः अव्ययीभावः, अर्थात् पूर्वपदार्थस्य प्राधान्यं यत्रस्यात्, सः अव्ययीभावसमासो भवति। यथा-'अधिहरि' इत्यत्र 'अधि' इति पूर्वपदं विभक्त्यर्थे, वर्तते तस्यैव च प्राधान्यं वर्तते। उत्तरदार्थप्रधानस्तत्पुरुषः। अर्थात् उत्तरपदार्थस्य प्राधान्यं यत्र भवति स तत्पुरुषो भवति। यथा-राजपुरुष इत्यत्रोत्तरपदं पुरुष इति वर्तते तस्यैव च प्राधान्यमस्ति। उभयपदार्थस्य प्राधान्यं यस्मिन् समासे भवति स द्वन्द्वसमासो भवति। यथा ''रामलक्ष्मणौ''

१७ म.भा. २.१.४

१८ वै. सि. कौ.सर्वसमासशेषप्रकरणम्।

इत्यत्रोभयपदार्थस्य प्राधान्यमस्ति। अन्यपदार्थास्य प्राधान्यं यत्र भवति स बहुव्रीहिसमासो भवति। यथा– 'पीताम्बरः'। अत्रान्यपदार्थस्य प्राधान्यं वर्तते। प्राधान्यं च अन्यपदार्थेन सहान्वयेन ज्ञायते। यथा– 'राजपुरुषः गच्छति' इत्यत्र गमनक्रियायामुत्तरपदार्थभूतस्य पुरुषस्यैवान्वयो भवति, न तु राजपदार्थस्य। यतो हि यदा राजा प्रासादे शेते तदापि राजपुरुषः गच्छतीति वाक्यस्य प्रयोगो भवति। एवं सर्वत्रैव अन्वयेनैव प्राधान्याप्राधान्यं ज्ञायते। एतत्सर्वं 'पूर्वपदार्थप्रधानोऽव्ययीभावः' इत्यादिलक्षणमपि प्रायिकमेव वर्तते। यतो हि 'उन्मत्तगङ्गम्' इत्यत्र अव्ययीभावसमासो वर्तते, किन्तु पूर्वदार्थस्य प्राधान्यं नास्ति। अपित्वन्यपदार्थस्य प्राधान्यं वर्तते। 'सूपप्रति'इत्यव्ययीभावसमासे च उत्तरपदार्थस्य प्राधान्यं भवति। न तु पूर्वपदार्थप्राधान्यमस्ति। 'अर्धपिप्पली'इति तत्पुरुषसमासे पूर्वपदार्थस्य प्राधान्यं वर्तते। उत्तरपदार्थस्य प्राधान्यं नास्ति। 'द्वित्रा'' इत्यत्र द्वौ वा त्रयो वेति बहुव्रीहिसमासोऽस्ति, किन्तु अन्यपदार्थस्य प्राधान्यं नास्ति। अपितूभयपदार्थस्य प्राधान्यं वर्तते। 'शशकुशपलाशम्' इत्यत्र द्वन्द्वसमासो विद्यते, तथापि उभयपदार्थस्य प्राधान्यं नास्ति। किन्तु समाहाररूपान्यपदार्थस्य प्राधान्यमस्ति। इत्थं ज्ञायते यत् योऽयं पूर्वपदार्थप्राधान्यादि–समाससलक्षणमुक्तं तत्प्रायिकमेव। तत्'पूर्वपदार्थप्रधानोऽव्ययीभावः' इत्यादि समासस्य लक्षणं वास्तविकं नास्ति रेखागवयादिवदेव समासस्य परिचायकमात्रं भवति। वस्तुतस्तु सिद्धान्तभूतं समासलक्षणम् अव्ययीभावाधिकारपठितत्वमव्ययीभावत्वमित्यादिकं स्वीकर्यमिति भावः। तदुक्तम्–

**समासस्तु चतुर्धेति प्रायोवादस्तथापरः।**
**योऽयं पूर्वपदार्थादिप्राधान्यविषयः स च।।**[१९]

पङ्कजादिपदेषु अवयवशक्तिव्यतिरिक्ता समुदायशक्तिः स्वीकृता वर्तते, तथैव समासादिवृत्तिषु अपि अवयवशक्त्यतिरिक्तसमुदायशक्तिर्भवति । उक्तञ्च–**समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्,** इति। अर्थात् पङ्कजशब्दवत् समासेऽपि भिन्नैव शक्तिः वर्तते, न तु अवयवशक्तिरेव इति भावः।

अतः 'पूर्वपदार्थप्रधानोऽव्ययीभावः' इत्यादीनि लक्षणानि सिद्धान्ते भवितुं नार्हति। यतो हि जहत्स्वार्थायां वृत्तौ पूर्वोत्तरपदयोरर्थ नैव भवति। समुदायार्थो भवति तदानीं तयोः प्राधान्यकल्पनमनुचितमेव। समासात्पूर्वं यत् पूर्वपदार्थस्य विशेष्यतारूपप्राधान्यमासीत् तदधिश्रित्य पूर्वपदार्थप्राधान्यादिव्यवहाराङ्गीकारेणोक्तलक्षणानि बोध्यानि।

एते विभागाः वैयमकरणभूषणसारदिशा संक्षिप्ततया प्रदर्शिता। विद्वद्भिः नाना प्रकारेण समासविभागाः स्वीकृताः सन्ति। लघुसिद्धान्तकौमुद्यां पञ्चधा समासः स्वीकृतः। तत्र विशेषसंज्ञाविनिर्मुक्तः केवलसमासोऽपि स्वीकृतोऽस्ति। अग्निपुराणे –

१९ वै.भू.सा.सु.प्र.

**षोढा समासं वक्ष्यामि अष्टाविमशतिधा पुनः।**[२०]

ते च वाररुचसंग्रहे एवं प्रदर्शिताः-

**तत्राष्टधा तत्परुषः षड्विधः कर्मधारयः।**
**षड्विधश्च बहुव्रीहिर्द्विगुराभाषितो द्विधाः**
**द्वन्द्वश्चतुर्विधो ज्ञेयोऽव्ययीभावो द्विधा मतः**[२१]

समासचक्रे च-

**'षोढाः समासः संक्षेपादष्टाविंशतिधा पुनः।**
**नित्याऽनित्यत्वयोगेन लुगलुक्तत्वेन च द्विधा।।**
**तत्राष्टधा तत्पुरुषः सप्तधा कर्मधारयः।**
**सप्तधा च बहुव्रीहिर्दिगुराभाषितो द्विधा।।**
**द्वन्द्वोऽपि द्विविधो ज्ञेयो ऽव्ययीभावो द्विधा मतः।**
**तेषाम्पुनः समासानां प्राधान्यं स्याच्चतुर्विधम्।।**
**चकारबहुलो द्वन्द्वः स चासौ कर्मधारयः।**
**यस्य येषां बहुव्रीहिः शेषस्तत्पुरुषः स्मृतः॥'**

अर्थात् समासः षड्विधः- तत्पुरुषकर्मधारयबहुव्रीहिद्विगुद्वन्द्वाव्ययीभावभेदात्। द्विगुकर्मधारयौ तत्पुरुषभेदौ। वस्तुतस्तु समासाश्चत्वार एव प्रसद्धिमागताश्च सन्ति।

अव्ययीभावाधिकारपठितत्वमव्ययीभावत्वम्। यथा- हरौ इति- अधिहरि, क्रममनतिक्रम्य यथाक्रमम्, कुम्भस्य समीपमुपकुम्भम्, मक्षिकाणामभावो निर्मक्षिकम् इत्यादयः। अत्र **अव्ययीभावश्च**[२२] इति सूत्रेण अव्ययीभावसमासस्याव्ययत्वम्, **अव्ययीभावश्च**[२३] सूत्रेण च नपुंसकलिङ्गत्वं ज्ञेयम्। समासोऽयं द्विविधो- नित्यानित्यभेदात्। तत्पुरुषाधिकारपठितत्वं तत्पुरुषत्वम्। तत्राष्टधा तत्पुरुषः - प्रथमातत्पुरुष- द्वितीयातत्पुरुष-तृतीयातत्पुरुष-चतुर्थीतत्पुरुष-पञ्चमीतत्पुरुष-षष्ठीतत्पुरुष-सप्तमीतत्पुरुष- नञ्तत्पुरुषभेदात्। द्विगुकर्मधारयौ च तत्पुरुषभेदौ। प्रथमातत्पुरुषो यथा - अर्द्धं पिप्पल्या अर्द्धपिप्पली। द्वितीयातत्पुरुषो यथा - कृष्णं श्रितः कृष्णश्रितः। तृतीयातत्पुरुषो यथा शडकुलया खण्डः शकुलाखण्डः। चतुर्थीतत्पुरुषो यथा - यूपाय दारु यूपदारु। पञ्चमीतत्पुरुषो- यथा अर्थादपेतः अर्थापेतः। षष्ठीतत्पुरुषो यथा- राज्ञः पुरुषो राजपुरुषः। सप्तमीतत्पुरुषो यथा- अक्षेषु शौण्डः। नञ् तत्पुरुषो यथा- न ब्राह्मणः अब्राह्मण इति।।

२० अग्निपुराणम् अ. ३५५
२१ समासवृत्तिविमर्शः पृ.सं.९६
२२ पा.सू.१.१.४१
२३ पा.सू.२.४.१८

तत्पुरुषसमास एव यदि संख्यापूर्वो भवति तदा द्विगुसमासो भवति। '**संख्यापूर्वो द्विगुः**'[२४] इति नियमात्। अत एव तत्पुरुषभेदोऽयम्। दिगुसमासो द्विविधः। एकवद्भावानेकवद्भावभेदात्। एकवद्भावी यथा– पञ्चानां पात्राणां संसाहारः पञ्चपात्रम्। अनेकवद्भावी यथा– सप्त च ते सप्तर्षयः।

समानाधिकरणः तत्पुरुषः कर्मधारयः कथ्यते। 'तत्पुरुषः समानाधिकरणः कर्मधारयः'[२५] इति सूत्रात्। अतोऽयमपि तत्पुरुषभेद एव। कर्मधारयश्च सप्तविधः– १. विशेषणपूर्वपदः, २. विशेष्यपूर्वपदः, ३. विशेषणोभयपूर्वपदः, ४. उपमानपूर्वपदः ५. उपमानोत्तरपूर्वपदः, ६. सम्भावनापूर्वपदः, ७. अवधारणापूर्वपदश्चेति। मध्यमपदलोपी इत्यभिधेयः कर्मधारयोऽपि दृश्यते। तेनाष्टौ भेदा वेति। विशेषणपूर्वपदः कर्मधारयो यथा – कृष्णश्चासौ सर्पश्च कृष्णसर्पः। विशेष्यपूर्वपदः कर्मधारयो यथा– वैयाकरणश्चासौ खसूचिश्च वैयाकरणखसूचिः। विशेषणोभयपूर्वपदः कर्मधारयो यथा– शीतं च तदुष्णञ्च शीतोष्णम्। उपमानपूर्वपदः कर्मधारयो यथा – घन इव श्यामो घनश्यामः, उपमानपूर्वपदो यथा– चन्द्रवद् मुखं– चन्द्रमुखम्। उपमानोत्तरकर्मधारयो यथा – पुरुषो व्याघ्र इव इति पुरुषव्याघ्रः। सम्भावनापूर्वपदः कर्मधारयो यथा– गुण इति बुद्धिः गुणबुद्धिः। अवधारणापूर्वपदः कर्मधारयो यथा– विद्यैव धनं विद्याधनम्। मध्यमपदलोपी समासो यथा– शाकप्रियः पार्थिवः शाकपार्थिवः।

उभयपदार्थप्रधानत्वं चकारबहुलत्वं द्वन्द्वाधिकारपठितत्वं वा द्वन्द्वसमासत्वम्। 'चार्थे द्वन्द्व'[२६] इति सूत्रात्। द्वन्द्वो द्विविधः इतरेतरद्वन्द्वसमाहारद्वन्द्वभेदात्। इतरेतरद्वन्द्वो यथा– प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ। समाहारद्वन्द्वो यथा – वाक् च त्वक् चेत्यनयोः समाहारः वाक्त्वचम्। 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम'[२७] इति सूत्रेण द्वन्द्वैकवद्भावो भवति। प्राण्यङ्गे यथा– पाणी च पादौ च मुखञ्च पाणिपादमुखम्। तूर्याङ्गो यथा – मार्दङ्गिकश्च वैणविकञ्च मार्दङ्गिकवैणविकम्। सेनाङ्गे यथा–राजन्याश्च रथाश्च अश्वाश्च राजन्यथाश्वम्।।

अन्यपदार्थप्रधानत्वं बहुव्रीह्यधिकारपठितत्वं वा बहुव्रीहित्वम्। बहुव्रीहिश्च सप्तविधः– द्विपद–बहुपद–सहपूर्वपद्–संख्योत्तरपद–संख्योभयपद–व्यतिहारलक्षण– दिगन्तराललक्षणभेदात्। द्विपदबहुव्रीहिर्यथा– चित्राः गावो यस्य सः चित्रगुः। प्राप्तमुदकं यं सः प्राप्तोदको ग्रामः। बहुपदबहुव्रीहिर्यथा– अधिकः उन्नतः अंसो यस्य स अधिकोन्नतांसः। सहपूर्वपदबहुव्रीहिर्यथा – सह कृष्णेन वर्तते इति सकृष्णः। संख्योत्तरपदबहुव्रीहिर्यथा– दशानां समीपे ये सन्ति ते उपदशाः।

२४. पा.सू.२.१.५२

२५ पा.सू.१.२.४२

२६ पा.सू.२.२.२९

२७ पा.सू.२.४.२

संख्योभयपदो यथा– द्वौ वा त्रयो वा द्वित्राः। व्यतिहारलक्षणो यथा– केशेषु केशेषु गृहीत्वा इदं युद्धम्प्रवर्तत इति केशाकशि युद्धम्। दिगन्तराललक्षणो यथा– दक्षिणस्याः पूर्वस्याश्च दिशो यदन्तरालम् सा दक्षिणपूर्वा। यत्र विभक्तेर्लोपो न भवति। सोऽलुक्समासो, यथा – वने चरतीति वनेचरः। स्तम्बेरमः।।

एवं प्रकारेण विद्वद्भि समासविभागोऽनेकधा कल्पितः। यद्यपि समास विधायकानि यावन्ति सूत्राणि तावन्तो भेदाः समासस्य कल्पयितुं शक्यन्ते। भेदे सत्येव, महर्षिभिः सूत्रविभागो सूत्रभेदो वा समाश्रितः। तथापि तेषां समेषां षड्विधसमासेस्वेवान्तर्भावः सम्भवतीति भूषणादौ तदेव प्रतिपादित इत्यलं विस्तरेण।

******

# मतान्तरनिराकरणपूर्वकं शाब्दिकाभिमसामर्थ्योपपादनम्

**श्रीधरकुमारः**
शोधच्छात्रः व्याकरणविभागः
(रा.सं.सं.भोपालपरिसरः)

भगवता पाणिनिनाऽष्टष्वध्यायेषु शब्दसाधुत्वाभिधायकं व्याकरणशास्त्रं प्रणीतम्। शास्त्रेऽस्मिन् भट्टोजिदीक्षितस्य प्रक्रियारूपा एका विशिष्टाधारा वर्तते। अत्र ध्यष्टाध्यायीक्रममनपेक्ष्य स्वमेधया प्रकरणनिर्माणं कृत्वा सर्वाणि सूत्राणि वैज्ञानिकपद्धत्या तत्तदस्थाने प्रदत्तम्। प्रकरणक्रमे हि कारकप्रकरणानन्तरं विशिष्टमेकं समासप्रकरणं निर्मितम्। यद्यप्यवान्तरभेदात् समासेऽपि बहूनि प्रकरणानि सति, तथापि सर्वेषां प्रकरणानां समासेऽन्तर्भूत्वादेकं समासप्रकरणं मयाऽभिहितम्। तत्र समासो नाम 'अनेकस्य पदस्य एकपदीभवनम्, समसनं समासो वा' भावे घञ्। वस्तुतस्तु 'अकर्तरि च कारके'[1] इति कर्मणि घञ्। अन्यथा सुबन्तं समस्यत इत्युतरग्रन्थो न संगच्छते। समासप्रकरणे 'समर्थः पदविधि'[2] इति सूत्रस्य प्रभावो भवति। विधीयते इति विधः– कार्यम्। पदस्य विधिः पदविधिरिति शेषषष्ठ्या समासः। तस्मात् पदसम्बन्धि यो विधिः स समर्थाश्रितो बोध्यः। अत्र समर्थशब्दः समर्थाश्रिते लाक्षणिकः। तेन समार्थ्ये एव समासो भवति। सूत्रे समागतं समर्थपदं विचारणीयम्। तच्च सामर्थ्यं द्विविधम् व्यपेक्षालक्षणम् एकार्थीभावलक्षणञ्च। तत्र स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादिवशात् यः परस्परान्वयः तद् व्यपेक्षाविधं समार्थ्यम्, विशिष्टा अपेक्षा व्यपेक्षा इति व्युत्पत्तेः सम्बद्धार्थः समर्थ इति व्युत्पत्तेश्च। इदञ्च राज्ञः पुरुष इत्यादि वाक्य एव भवति। एतेषाम्मते समासे शक्तिर्न भवति। व्यपेक्षावादिषु मुख्यरूपेण नैयायिकमीमांसकादयः वर्तन्ते। समासे शक्त्या भावादेव 'राजपुरुष' इत्यादौ राजपदादेः तत्सम्बन्धिनि लक्षणयैव राजसम्बन्धवदभिन्नः पुरुषः इति बोधो भवति। अत एव राज्ञः पदार्थैकदेशत्वान्न तत्र ऋद्धस्येप्यादिविशेषणान्वयः। 'पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेन' इत्युक्तेः। 'सविशेषणानां वृत्तिर्न, वृत्तस्य च विशेषण योगो न' इत्युक्तेश्च। न वा घनश्यामो, निष्कौशाम्बिः गोरथ इत्यादाविवादिप्रयोगापत्तिः। लक्षणयैवोक्तार्थतया उक्तार्थानामप्रयोग इति न्यायेन इवादीनामप्रयोगात्।

१. पा.सू. ३.३.१९३
२. पा.सू. २.१.१

नापि 'विभाषा'[३] इति सूत्रमावश्यकम्, लक्षणया राजसम्बन्ध्यभिन्न इति बुबोधयिषायां समासस्य, राजसम्बन्धवानिति बुबोधयिषायां विग्रहस्य च प्रयोगनियमसम्भवात्। नापि 'शक्तिः पङ्कजशब्दवद्' इति पङ्कजशब्दप्रतिद्वन्द्विता शक्तिसाधिका, तत्रावयवशक्तिमजानतोऽपि ततो बोधात्। अवयवशक्त्यज्ञाने सति लक्षणया विशिष्टस्यार्थस्य प्रतीतिर्नोपपद्यते, लक्षणाज्ञाने शक्तिज्ञानस्य कारणत्वात्। अत एव राजपुरुषादौ अवयवशक्तिज्ञानाभावदशायां शाब्दबोधाभावः सर्वानुभवसिद्धाः, एवञ्च राजपुरुषादौ बोधाभास्तादृशावस्थायां स्वीकृत एव। न च चित्रगुरित्यादौ लक्षणासम्भवेऽपि अषष्ठयर्थबहुब्रीहौ लक्षणाया असम्भवः बहुव्युत्पत्तिभञ्जनापत्तेरिति वाच्यम्, प्राप्तोदक इत्यादौ उदकपदे एव लक्षणास्वीकारात्, पूर्वपदस्य यौगिकत्वेन तत्र लक्षणाया धातुप्रत्ययतदर्थज्ञानसाध्यतया विलम्बितत्वात्। प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्व-व्युत्पत्त्यनुरोधाच्च। नन्वेवं घटादिपदेष्वऽपि चरमवर्णे एव वाचकताकल्पनं स्यात्, पूर्वपूर्ववर्णानां तात्पर्यग्राहकत्वेनोपयोगसम्भवात्, प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वमिति व्युत्पत्त्यनुरोधादिति चेन्न, घटादिपदे व्यवहारादिना समुदाय एव शक्तिग्रहात् प्रत्येकवर्णे पर्याप्त्या बोधकत्वं नास्ति, समासे च प्रत्येकपदे पर्याप्त्या बोधकत्वमिति सत्त्वान्न तुल्यन्यायापत्तिरित्यत आह- घटादिपदे चातिरिक्ता शक्तिः कल्प्यमाना प्रत्येकं वर्णेषु बोधकत्वेऽपि विशिष्टे कल्प्यते, विशिष्टस्यैव सङ्केतितत्वात्। अर्थात् व्युत्पत्तिपक्षे घटपदेऽपि धातुप्रत्ययादिनिष्ठा शक्तिः कल्प्यते इति तत्रापि गौरवापत्तिः समानैव स्यात् परन्तु तत्र विशिष्टे एव सङ्केतग्रहस्यानुभसिद्धत्वात् विशिष्ट एव शक्तिः सिद्धयति। प्रकृते चात्यन्तसन्निधानेन प्रत्ययान्वयसौलभ्याय उत्तरपदे एव लक्षणा कल्प्यत इति विशेषः स्वीकृत्यञ्च घटादिपदेष्वपि चरमवर्णस्यैव वाचकत्वं मीमांसकत्वमन्यैरित्याहुः। एतावत् नैयायिकाभिमतं व्यपेक्षारूपसामर्थ्यं वैशेछेनोपस्थापितम्। वैयाकरणास्तु नेदं समर्थयति। एतेषाम्मते एकार्थीभावरूपसमार्थ्याम् एव ज्यायमिति। एतदेवाभिप्रेत्यादौ व्यपेक्षावादीनाम्मतन्निराकर्तुमाह नागेशः- समासे शक्त्यस्वीकारे विशिष्टस्यार्थवत्त्वाभावेन प्रातिपदिकत्वं न स्यात्। एकवृत्याश्रयत्वमर्थवत्त्वमिति स्वीकारादेव 'अर्थवत्...' सूत्रे भाष्ये 'अर्थवदिति किम्, अर्थवत्तां समुदायोऽनर्थकः दश दाडिमानि षडपूपाः कुण्डमजाऽजिनम्'[४] इति प्रत्युदाहृतम्। अत्र समुदाये परस्पराकाङ्क्षाभावेनैकवृत्त्याश्रयत्व-रूपार्थवत्त्वाभावान्न प्रातिपदिकत्वमिति। एवञ्च राजपुरुषपदयोस्त्वन्मते प्रत्येकमर्थवत्त्वेऽपि समुदायस्य दशदाडिमादिवदनर्थकत्वात् प्रातिपदिकत्वनापत्तेः। यदि 'कृततद्धितसमासाश्च'[५] इति सूत्रे समासग्रहणात् प्रातिपदिकसंज्ञोच्यते चेत्, तदपी न, समासग्रहणस्य निमार्थताया भाष्यकृतैव

३. पा.सू. २.१.११
४. महाभाष्य १.२.४५
५. पा.सू. १.२.४६

प्रतिपादितत्वात्। तथा चान्यनिवृत्तिफलकसिद्धिविषयकविधित्वरूपनियमत्वाय समासस्यार्थवत्वमावश्यकम्। अन्यथा सिद्धिं विना नियमत्वायोगात्। सिद्धे सति आरभमानो विधिर्नियमाय कल्प्यते इति न्यायात् अर्थवत्त्वे सत्येव नियमार्थकत्वमपि सम्भवति। अत एव राज्ञः पुरुषो देवदत्तः पचतीत्यादि वाक्यस्य मूलकेनोपदंशमित्यादेश्च न प्रातिपदिकत्वम्। नैयाकिादिमते 'कृतद्धितसमासाश्च' इति सूत्रे अर्थवत्पदासम्बन्धात् 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्'[६] इति परिभाषया विशिष्टस्य कृदन्ततदादित्वात् तत्राऽतिप्रसङ्गो दूर्वार एव। तद्वारणाय समासग्रहणकृतनियमस्य साफल्यं बोध्यम्। शाब्दिकानाम्मते तु कृतद्धित इत्यादि सूत्रेऽर्थवत्पदस्य सम्बन्धेऽपि समासग्रहणीयनियमेन दोषवारणं भवति। ननु समासे शक्त्यस्वीकारेऽपि तत्र लक्षणयार्थवत्त्वं स्यादत आह- किञ्च समासे शक्त्यस्वीकारे शक्त्यसम्बन्धरूपलक्षणाया अप्यसम्भवेन लाक्षणिकार्थवत्त्वस्याप्यसम्भवेन सर्वथा प्रातिपदिकत्वाभाव एव निश्चितः स्यादिति स्वाद्यनुपपत्तौ 'अपदं न प्रयुञ्जीत' इति भाष्यात्समस्तप्रयोगविलयापत्तेः। तस्मादेकार्थीभावः स्वीकर्तव्यः। एकार्थीभावलक्षणसामर्थ्यं तु प्रक्रियादशायां प्रत्येकमर्थवत्त्वेन पृथग् गृहीतानां पदानां समुदायशक्त्या विशिष्टैकार्थप्रतिपादकतारूपम्। संगतार्थः समर्थः, संसृष्टार्थः समर्थः इति व्युत्पत्तेः। संगतिः संसर्गश्च एकीभाव। यथा संगतं घृतं तैलेनति एकीभूतमिति गम्यते, यथा वा संसृष्टोऽग्निरिति एकीभूत इति गम्यत इति भाष्याच्च। इदं च सामर्थ्यं राजपुरुष इत्यादि वृत्तावेव। अत एव ऋद्धस्य राजपुरुष इत्येवं राज्ञि पुरुषविशेषणे ऋद्धत्वविशेषणं नान्वेति, विशिष्टस्यैकपदार्थतया राज्ञः पदार्थैकदेशत्वात्। 'देवदत्तस्य गुरुकुलम्' इत्यत्र तु उपसर्गजन्य नित्यसापेक्षत्वात् समासः। यद्वा गुरुवद्देवदत्तोऽपि विशेष्ये प्रधाने कुल एवान्वेति, तत्र गुरुणा कुलस्य उत्पाद्यत्वसम्बन्धेनान्वयः। देवदत्तेन तु कुलस्य तदीय गुरुत्पाद्यतयाऽन्यवयो गुरुगर्भः। एतेन 'अयश्शूल...'[७] इति सूत्रे भाष्ये 'शिवस्य भगवतो भक्तः' इत्यर्थे शिवभागवत इत्यादि व्याख्यातम्। एकार्थीभावश्चायमलौकिकविग्रहवाक्ये कल्प्यते यथा लादेशभूतशतृशानचोः अप्रथमासमानाधिकरण्यं कल्प्यते तद्वत्। अत एव 'लस्य अप्रथमासमानाधिकरणेनार्थेनायोगादादेशानुपपत्तिः, तस्य क्वापिप्रयोगाभावादिव्याक्षिप्य आदेशे समानाधिकरण्यं दृष्ट्वा अनुमानाद् गन्तव्यं प्रकृतेरपि तद्भवति इति 'लटश्शतृशानचौ...'[८] इति सूत्रभाष्ये समाहितम्। 'सिद्धानां शब्दानामन्वाख्यानात् पचन्तं देवदत्तं पश्येव्यादिप्रयोगदर्शनात् स्थानिनोऽपि लस्य प्रक्रियार्थं कल्पितस्य अप्रथमासामानाधिकरण्यमनुमीयते' इति कैयटः। अत्र प्रक्रियार्थं कल्पितस्येत्युक्त्या अन्यस्यापि प्रक्रियार्थं कल्पितस्य बोधकत्वकल्पना सूचिता। अलौकिकविग्रहवाक्ये श्रूयमाणानां च शब्दानां

६. परिभाषेन्दुशेखरः -परिभाषा क्रमाङ्क-७६

७. पा.सू. ५.२.७६

८. महाभाष्य ३.२.१२४

क्लृप्तशक्तित्यागे मानाभावात् प्रत्येक शक्तिसहकृतया समुदायशक्त्या विशिष्टोपस्थितिः। ततश्च अयमेकार्थीभावः अहजत्स्वार्था वृत्तिरिष्यते। वृत्तिविषये पदानां प्रत्येकमनर्थकत्वमाश्रित्य जहत्स्वार्था वृत्तिरस्तु नाश्रयितुं युक्ताः, 'महाबाहु, सुपन्था' इत्यादौ आत्वाद्यनापत्तेः वृत्तौ महदादिशब्दानामनर्थकत्वाद् अर्थवद्ग्रहणसम्भवे अनर्थकस्य 'आन्महत....'[९] इत्यादौ ग्रहणायोगाद्। तदुक्तम् -

**जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी।**[१०]

इत्यभियुक्तोक्तेः अवयवार्थसंवलितसमुदायार्थे पङ्क्ते शक्तिस्वीकारात्। अत एव चतुर्विधः शब्दः, यथा-१. रूढः, २. योगरूढः, ३. यौगिकः, ४. योगिकरूढश्चेति। अवयवार्थमनपेक्ष्य समुदायशक्तिमात्रेणार्थबोधकत्वं रूढत्वम् - यथा रथन्तरमित्यादौ। अवयवार्थसंविलितसमुदाय-शक्त्याऽर्थबोधकत्वं यौगरूढत्वम्-पङ्कजमित्यादौ। अवयवशक्त्यैवार्थबोधकत्वं यौगिकम् - पाचिका पाठिकेत्यादौ। अवयवशक्त्यासमुदायशक्त्या चार्थबोधकत्वम यौगिकरूढत्वम्। मण्डपानकर्तृपरोऽपि गृहविशेषपरोऽपि मण्डशब्द उदाहरणमिति विवेकः। व्यपेक्षापक्षे दूषणं शक्तिसाधकम्। भूषणप्याह -

**समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्।**
**बहूनां वृत्तिधर्माणां वचनैरेव साधने।**
**स्यान्महद् गौरवं तस्मादेकार्थीभाव आश्रितः।।**[११]

पङ्कजशब्दे योगार्थस्वीकारे शैवालादेरपि प्रत्ययः स्यात्। वृत्तिधर्माः- विशेषणलिङ्गसंख्यायोगादयः 'सविशेषणानां वृत्तिर्न' इत्यादि वचनेरेव साध्याः, इति तत्तद्वचनस्वीकार एव गौरवम्। मम तु एकार्थीभावस्वीकारादवयवार्थाभावाद्विशेषणाद्योगो न्यायसिद्धः वचनं च न कर्तव्यं न्यायसिद्धं चेति लाघवम्। तस्मादेकार्थी भावरिति सिद्धान्तः।

****

९. पा.सू. ६.३.४६
१०. परमलघुमञ्जुषा, जशङ्करलालत्रिपाठी, समासादिवृत्त्यर्थनिरूपणम्, पृ.३०९
११. वैयाकरणभूषणसारकारिका - ३१

# तद्धिताधिकारे समासान्तप्रत्ययविमर्शः

ज्योतिः आर्या
शोधच्छात्रा

सन्धयः समासाश्च संस्कृतभाषादुर्गस्य परिखाः सन्ति। यथा परिखामवगाहनेऽसमर्थो जनः दुर्गं विजेतुं समर्थो न भवति तथैव समासं सन्धिञ्चाविज्ञाय संस्कृतभाषामपि विज्ञातुं न शक्नोति।

समासशब्दः सम् पूर्वात् अस् धातोः भावार्थके घञि प्रत्यये[१] परतः प्रत्ययस्य ञित्वाद् वृद्धौ सति सिद्ध्यति। समासपदस्य नैकविधाः परिभाषाः प्राप्यन्ते। तद्यथा –'समसनं समासः'[२] द्वयोः बहूनां वा पदानां मिलित्वा एकपदभवनं समासः। समासविषये वक्तुं शक्यते यत् –

**विभक्तिर्लुप्यते यत्र तदर्थस्तु प्रतीयते।**
**पदानां चैकपद्यञ्च समासः सोऽभिधीयते॥**

उत वा

**पदानां लुप्यते यत्र प्रायः स्वाः स्वाः विभक्तयः।**
**पुनरेकपदीभाव समास उच्यते तदा॥**

लघुसिद्धान्तकौमुद्याः इन्दुमतिटीकायां समासस्य परिभाषा– एकार्थवाचकतां प्राप्तो भिन्नार्थकाऽनेकपदसमूहः समासः[३]। एवं कृता वर्तते पाणिनीयाष्टके समासप्रकरणे प्रथमे सूत्रे एव विहितमस्ति यत् समर्थानां = संगतार्थानां, संसृष्टार्थानां, सम्प्रेक्षितार्थानां, सम्बद्धार्थानां पदानां समासविधिर्भवति।[४] यत्रासमर्थत्वमस्ति तत्र समासो न भवति। 'सह सुपा'[५] इति सूत्रनियमात् सुपा सह सुबेव समस्यते न सुपा तिङ्न च तिङा सुप्।

समासविषये केचन नियमाः अवश्यं ध्येयाः–

[क] समासात् पूर्वमर्थं वीक्ष्य पदानां लौकिकविग्रहः क्रियते यत्र यथार्थं विभक्तयो योज्यन्ते।

१ भावे – पा.सू. ३.३.१८
२ लघुसिद्धान्तकौमुदी [समासप्रकरणम् – भूमिका]
३ लघुसिद्धान्तकौमुदी – इन्दुमति संस्कृतहिन्दी टीका [ सम्पादकः – पं.रामचन्द्र झा]
४ समर्थः पदविधिः – पा.सू., २.१.१
५ पा.सू., २.१.४

तदनु अलौकिकविग्रहे मूलपदानि तेषां विभक्तिप्रत्ययाश्च लिख्यन्ते।

[ख] समर्थानामेव पदानां समासो भवति नाऽसमर्थानाम्।

[ग] सर्वप्रथमं समासविधायकसूत्रस्य प्रवृत्तिर्भवति।

[घ] समाससंज्ञायां सत्यां 'कृत्तद्धितसमासाश्च'[६] इति प्रातिपादिकसंज्ञायां 'सुपो धातुप्रातिपदिकयोः'[७] इति तदवयवभूतानां सुपां लोपो भवति।

[ङ] पूर्वनिपातस्य परनिपातस्य वा निर्णयो भवति।

[च] पुनः प्रातिपदिकसंज्ञायां सत्यां सुबाद्युत्पत्तौ पदत्वं भवति।[८]

[छ] समासप्रकरणे महाविभाषा[९] प्रसङ्गात् सर्वमपि समासप्रकरणं वैकल्पिकमास्ते, एकस्मिन् पक्षे वाक्यमपि प्रयुज्यते।

सर्वेषु समासेषु समासविध्यन्तरमेव पदनिष्पादनार्थं केचन समासान्तप्रत्ययाः अपि भवन्ति, ते प्रत्ययाः पाणिनीयाष्टकस्य पञ्चमाध्याये समासान्तप्रकरणे विहिता वर्त्तन्ते। तद्धिताधिकारप्रकरणे समासान्तप्रत्ययानां विमर्शोऽस्य लेखस्य विषयो वर्त्तते। ते समासान्तप्रत्ययाः पञ्चमाध्यायस्य चतुर्थे पादे विहिताः सन्ति।[१०] तत्र नियमोऽस्ति पूजनवचनात् प्रातिपदिकात् उत्तरे ये शब्दाः तेभ्यः समासान्ताः प्रत्ययाः न भवन्ति।[११] क्षेपे वर्त्तमानात् किं शब्दादपि परेभ्यः प्रातिपदिकेभ्यः समासान्ताः प्रत्ययाः न भवन्ति।[१२] यथा – किं राजा यो न रक्षति। नञः परे ये शब्दाः तदन्तात् तत्पुरुषादपि समासान्ताः न भवन्ति।[१३] तद्यथा – अराजा, असखा। नञः परः यः पथिन् शब्दः तदन्तादपि तत्पुरुषात् समासान्ताः न भवन्ति।[१४] यथा – अपथम्, अपन्थाः।

समासविधायके प्रकरणे मुख्यतया अव्ययीभावः, तत्पुरुषः, बहुब्रीहिः, द्वन्द्वः इति चत्वारः समासाः विहिताः वर्त्तन्ते। तत्पुरुषस्य द्वितीयाप्रभृति सप्तमीपर्यन्तं प्रतिविभक्ति परिमिताः भेदाः, द्विगुः, कर्मधारयः, नञ् इत्येवं नवभेदाः, द्वन्द्वस्य समाहारेतरेतरनामकौ द्वौ भेदौ, केवलसमासश्चापरः, एवं कृत्वा समासस्य चतुर्दश भेदाः वर्त्तन्ते। समासान्तप्रकरणे अव्ययीभावः, बहुब्रीहिः, द्वन्द्वः,

६ पा.सू., १.२.४६
७ पा.सू., २.४.७१
८ सुप्तिङन्तं पदम् –पा.सू.,१.४.१४
९ विभाषापपरिबहिरञ्चवः पञ्चम्याः – पा.सू., २.१.११
१० समासान्ताः – पा.सू., ५.४.६८
११ न पूजनात् – पा.सू., ५.४.६९
१२ किमः क्षेपे – पा.सू., ५..४.७०
१३ नञस्तत्पुरुषात् – पा.सू., ५.४.७१
१४ पथो विभाषा – पा.सू., ५.४.७२

तत्पुरुषः, तत्पुरुषे द्विगुः द्वन्द्वे च समाहारः, एतेषु समासान्ताः प्रत्ययाः विहिताः। नञ्तत्पुरुषश्च वर्त्तत एव। अन्येषां समासानां नामान्यत्र नैव गृहीतानि सन्ति।

समस्मिन् प्रकरणे ऊनपञ्चाशत् सुत्रेषु बहुब्रीहिसमासविषयकानां प्रत्ययानां वर्णनमस्ति। तानि सूत्राणि त्रयोदशाधिकैकशततमाद् सूत्राद् प्रभृति आपादपरिसमाप्तेःअष्टचत्वारिंशत् सूत्रेषु[१५] अथ 'बहुब्रीहौ संख्येये डज् बहुगणात्'[१६] इत्यस्मिन् सूत्रे वर्णिताः सन्ति। एतेषु सूत्रेषु केभ्यश्चित् सूत्रेभ्यः प्रत्ययाः विधीयन्ते, केभ्यश्चित्तु साक्षाच्छब्दाः एव विधीयन्ते। तद्यथा – 'नित्यमसिच् प्रजामेधयोः'[१७] इत्यत्र नञ्, दुः सुभ्यः परयोः प्रजामेधयोः असिच् प्रत्ययस्य विधानं तथा 'बहुप्रजाश्छन्दसि'[१८] इत्यत्र साक्षाद् 'बहुप्रजाः' शब्दः एव निपात्यते। केषुचित् सूत्रेषु प्रत्ययैः सहानुषङ्गिकरूपेण आदेशा अपि विधीयन्ते। तद्यथा – ऊधस् शब्दान्ताद् बहुब्रीहेः समासान्तोऽनङादेशो विधीयन्ते[१९] कुण्डोध्नी, घटोध्नी शब्दाश्च निर्मीयन्ते। एवं धनुष् शब्दान्तस्य च बहुब्रीहेः अनङादेशो विहितोऽस्ति[२०] एतेन पुष्पधन्वा, गाण्डीवधन्वा इत्यादयश्शब्दाः निष्पाद्यन्ते। एवमेव जायाशब्दान्तस्य बहुब्रीहेः निङादेशः[२१], गन्धशब्दान्तस्य इकारादेशः[२२], अल्पाख्यायां गन्धशब्दान्तस्य इकारादेशः[२३], उपमानाच्च गन्धशब्दान्तस्य इकारादेशः[२४], पादशब्दान्ते बहुब्रीहौ पादशब्दस्य अलोन्त्यलोपः[२५], संख्यासुपूर्वस्य च पाद–शब्दान्तस्य अलोन्त्यलोपो विहितोऽस्ति[२६]। एभिरुदाहरणैः सुतरां स्पष्टीभवति यत् बहुब्रीहौ समासे कुत्रचित् प्रत्ययविधानम्, कुत्रचिदादेशविधानम्, कुत्रचिद् वैकल्पिकविधयः, कुत्रचिच्च छान्दसविधयः विहिताः वर्त्तन्ते। एवं विधिना समस्तं बहुब्रीहि–समासान्तप्रकरणं पाणिनिना परिगण्यते।

समासान्तप्रकरणे बहुब्रीहेरनन्तरमेव दीर्घं प्रकरणमस्ति तत्पुरुषसमासस्य। तत्पुरुषसमासः 'तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः'[२७] सूत्रात् प्रभृति 'कुमहद्भ्यामन्यतरस्याम्'[२८] सूत्रपर्यन्तं

१५ पा.सू., ५.४.११३ तः ५.४.१६०
१६ पा.सू., ५.४.७३
१७ पा.सू., ५.४.१२२
१८ पा.सू., ५.४.१२३
१९ ऊधसोऽनङ्– पा.सू., ५.४.१३१
२० धनुषश्च – पा.सू., ५.४.१३२
२१ जायाया निङ्– पा.सू. ५.४.१३४
२२ गन्धस्येदुत्पूतिसुसुरभिभ्यः – पा.सू., ५.४.१३५
२३ अल्पाख्यायाम् – पा.सू., ५.४.१३६
२४ उपमानाच्च – पा.सू., ५.४.१३७
२५ पादस्य लोपोऽहस्त्यादिभ्यः – पा.सू., ५.४.१३८
२६ संख्यासुपूर्वस्य – पा.सू., ५.४.१४०
२७ पा.सू., ५.४.८६
२८ पा.सू., ५.४.१०५

वर्णितोऽस्ति। एतस्मिन् प्रकरणे केषुचित् सूत्रेषु प्रत्ययविधानम्, केषुचित् सूत्रेषु प्रत्ययनिषेधश्च कृतोऽस्ति। एतेष्वेव त्रिषु सूत्रेषु 'नावो द्विगोः'[२९] 'अर्धाच्च'[३०] 'खार्याः प्राचाम्'[३१] इत्यत्र द्विगुसमासस्य वर्णनमस्ति। तत्पुरुषेऽपि समासे छन्दोविषयकं वर्णनं कृतमस्ति। तद्यथा – अन्नन्तात् असन्ताच्च नपुंसकात् तत्पुरुषात् समासान्तष्टच् प्रत्ययः छन्दसि विधीयते।[३२] तेन 'हस्तिचर्मे जुहोति', 'देवच्छन्दसानि' इत्यादयः प्रयोगाः साध्यन्ते। एवं विंशतिसूत्रेषु प्रकरणेऽस्मिन् तत्पुरुषसमासः सन्निहितोऽस्ति।

तत्पुरुषानन्तरं विशिष्टमन्यत् प्रकरणमस्ति अव्ययीभावसमासस्य। अव्ययीभावः समासो 'अव्ययीभावे शरत्प्रभृतिभ्यः'[३३] प्रभृति 'गिरेश्च सेनकस्य'[३४] पर्यन्तं षट् सूत्रेषु वर्णितोऽस्ति। एतेषु सूत्रेषु अव्ययीभावसमासानन्तरं समासान्तः टच् प्रत्ययो विहितोऽस्ति।[३५]

द्वन्द्वसमासः केवलमेकस्मिन् एव सूत्रे वर्णितोऽस्ति। एषोऽपि समाहारे एव विधीयते नेतरेतरे। अस्मिन् सूत्रे चवर्गान्तात् टवर्गान्तात् षकारान्तात् हकारान्ताच्च समाहारे वर्तमानात् द्वन्द्वात् टच् प्रत्ययो विहितोऽस्ति।[३६] एतेन वाक्त्वचम्, समिद्दृषदम्, वाग्विपुरुषम्, छत्रोपाहनम् इत्यादयः प्रयोगाः साध्यन्ते।

अवशिष्टेषु सूत्रेषु पूर्वोक्तवत् प्रत्ययनिषेधः, अन्येषु च सामान्येन समासनामग्राहं विना प्रत्ययविधानं कृतमास्ते।

सम्पूर्णे समासान्तप्रकरणे पाणिनिराचार्यः उच्, अ, अच्, ट्च्, षच्, ष, अप्, असिच, अनिच्, इच्, कप् इत्येतान् सविशेषणान् प्रत्ययान् विहितवान् अस्ति। विदाङ्कुर्वन्त्येव विपश्चितः यदुपदेशेषु अनुबन्धाः कार्यविशेषादासज्यन्ते। एतेषु प्रत्ययेषु च येऽनुबन्धाः आसज्यन्ते तेऽपि सप्रयोजना एव सन्ति। तत्र चकारानुबन्धः 'चितः'[३७] इति अन्तोदात्तार्थः, कित् करणं वृद्ध्यर्थम्[३८],

---

२९ पा.सू., ५.४.९९
३० पा.सू., ५.४.१००
३१ पा.सू., ५.४.१०१
३२ अनसन्तान्नपुंसकाच्छन्दसि – पा.सू., ५.४.१०३
३३ पा.सू., ५.४.१०७
३४ पा.सू., ५.४.११२
३५ अनश्च – पा.सू., ५.४.१०८
३६ द्वन्द्वाच्चुदषहान्ताद् समाहारे – पा.सू., ५.४.१०६
३७ पा.सू., ६.१.१५७
३८ किति च – पा.सू., ७.२.११८

पित्करणम् अनुदात्तस्वरार्थम्[39], टित्करणं ङीबर्थम्[40], षित्करणं ङीषर्थम्।[41] एवं विभिन्नकार्याणि विधाय समासान्ताः शब्दाः निष्पन्नाः भवन्ति।

समस्तेन समासान्तप्रकरणानुशीलनेन ज्ञायते यदेतत् प्रकरणं समासप्रक्रिया-विज्ञानार्थमुपकारितममस्ति। समासप्रक्रियाविज्ञानं विना न कोऽपि शब्दानां प्रयोगे पाटवं प्राप्तुं पारयति। अतः एतत् समासान्तप्रकरणं सर्वैः सर्वथा सर्वदा सर्वतोभावेन ज्ञेयमेव। इदं नम ऋषिभ्यः पूर्वेभ्यः पथिकृद्भ्यः इति।

****

३९ अनुदात्तौ सुप्पितौ - पा.सू., ३.१.४

४० टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः - पा.सू., ४.१.१५

४१ षिद्गौरादिभ्यश्च - पा.सू., ४.१.४१

# समासे सामर्थ्यादिविचारः

**शिवब्रह्मनारायप्रतापः**
शोधच्छात्रः व्याकरणविभागः
(रा.सं.सं.भोपालपरिसरः)

यस्मिन् समुदाये पदद्वयं वा पदत्रयं वा परस्परं मिलित्वा एकं भवति स समुदायः समासः इति कथ्यते। **प्राक्कडारा समासः**[१] **समासस्य**[२] **समासान्ताः**[३] इत्यादिसूत्रेषु समासशब्दः भगवता सूत्रकारेण पाणिनिमहर्षिणा प्रयुक्तः। समास इति अन्वर्था संज्ञा। समसनं समासः संक्षेपः इत्यर्थः। संपूर्वकात् असु क्षेपणे धातोः भावार्थे घञि प्रत्यये सति **कुगतिप्रादयः**[४] इति सूत्रेण गतिसमासे च कृते समास इति पदं प्रादुर्भवति। यथा भोजस्य राज्यम् भोजराज्यम्। भोज ङस् राज्य सु इत्येवं स्थितयोः भिन्नशब्दयोः विभक्तिलोपादिना संक्षिप्तरूपतायामेव भगवता पाणिनिना दर्शितः समासशब्दः। अस्माकं लोकेऽपि ससासशब्दस्य संक्षिप्तार्थत्वं प्रसिद्धमस्ति। अतः पदानां लाघवेन बहुपदप्रयोगाय इयं समासप्रक्रिया ९९ सूत्रैः महर्षिः पाणिनिः अष्टाध्य्यायीग्रन्थे उपदिदेश। परञ्च महर्षिपाणिनिना समासं परिभाषयितुं सुस्पष्टतया किमपि सूत्रम् अत्र नोक्तम्।

अयञ्च समासः समर्थो भवति। तथा च सूत्रम् समर्थः पदविधिः[५]। अस्मिन् सूत्रे कृतद्धितसमासैकशेषसनाद्यन्तरूपाः पञ्चवृत्तयो भवन्ति। लोके वृत्तिशब्दः सर्वत्र व्यापारबोधकः एव प्रचलितः। तथा च शास्त्रेपि वृत्तिशब्दः व्यापारबोधकः एव स्यात्, परञ्च शास्त्रविषये किञ्चित् मतवैविद्धयं वर्तते। तस्यैव व्यापारस्यैकार्थीभावसामर्थ्यमिति शास्त्रे व्यवह्रियते। एकार्थीभावरूपा वृत्तिः कृदादिपञ्चवृत्तिषु वर्तत इति समर्थः पदविधिः इति सूत्रकारेण उपदिष्टम्। तेन वृत्तिपञ्चकस्य पदविधिरिति व्यवहारः सिद्धमिति। तत्र पदविधिर्नाम– विधीयत असाविति

१ पा.अ. २.१.३
२ पा.सू. ६.१.२२३
३ पा.अ.५.४.६८
४ पा.अ. २.२.१८
५ पा.अ. २.१.१

विधिः 'वि पूर्वक धाञ्धातोः' **उपसर्गे घो किः**[६] इति सूत्रेण कर्मणि किप्रत्यये सति विधिरिति शब्दो भवति। तदनन्तरं पदानां विधिरिति शेषषष्ठ्या समासः। सम्बन्धस्तु उद्देश्यविधेयरूपः पदोद्देश्यकविधिरिति यावत्। तथा च पदानां सतां विधीयमानो यः समाससंज्ञादिविधिः स पदविधिरिति निर्गलितोऽर्थः, सङ्गतश्चासौ अर्थश्च समर्थ इति प्रादिसमासः। सङ्गतशब्दः एकीभूतार्थबोधकः। सङ्गतं तैलं सङ्गतं घृतमित्यादौ तथा दर्शनात्। तथा च समर्थः एकीभूतार्थः इति वाच्यार्थे निष्पन्ने लक्षणया एकीभूतार्थबोधकशब्दाश्रित इत्यर्थ संपद्यते। एवं रीत्या पृथगर्थानामेकोपस्थितिजनकत्वमेकार्थीभावः। सूत्रप्रयोजनं तु पदानां समासव्याप्तिः। एवमेव संसृष्टचासौ अर्थश्च समर्थ इति।

व्यपेक्षारूपसार्थ्यमपि समर्थः पदविधिरिति सूत्रेणैव बोध्यते। व्यपेक्षायां संप्रेक्षितार्थस्समर्थः सम्बद्धार्थः समर्थ इति व्युत्पत्तिः। इदञ्च सामर्थ्यं द्विविधं भवतीति।

(क) व्यपेक्षालक्षणम्

(ख) एकार्थीभवलक्षणञ्च

**व्यपेक्षालक्षणम्-** एतत् विषये कैयटेन महाभाष्यप्रदीपे उक्तम्- **परस्पराकांक्षा रूपा व्यपेक्षा।**[९] तथा च व्यपेक्षालक्षणमेकार्थीभावलक्षणञ्च सामर्थ्यविषये परिभाषयन्नाह तत्वबोधिनीकारः- **स्वार्थपर्यवसायिनां पदानामकाङ्क्षादिवशाद्यः परस्परसम्बन्धः सा व्यपेक्षा।**[१०] यथा राज्ञः पुरुष इत्यादिवाक्ये। अस्मिन पक्षे प्रत्येकं पदं परस्परं साकाक्षं भवति।

**एकार्थीभावलक्षणम्-** एतत् विषये पूर्वोक्तम् अत्रैव एकार्थीभावस्तु- राजपुरुष इत्यादिवृत्तावेव। **पृथगर्थानामेकार्थीभाव**[११] इति भाष्यप्रदीपे उक्तम्। स चैकार्थीभावः प्रक्रियादशायां पृथगर्थत्वेन प्रथमगृहीतस्य विशिष्टैकार्थत्वरूपः। विग्रहवाक्ये तत्तपदैः पृथक्तया प्रतिपाद्याः राजाद्यार्थाः पृथगर्थाः समासे पुनस्त एवार्था एकार्थतां लभन्ते। अत एव तदेव यत्किञ्चित्पदजन्यपृथगुपस्थितविषयत्वेनलोकेदृष्टानामार्थानां विशिष्टविषयैकशक्त्यधीनोपस्थिति-विषयत्वमेवैकार्थीभावत्वमिति फलति।

वैयाकरणभूषणसारग्रन्थे ग्रन्थकारेण समसशक्तिप्रकरणे तत्पुरुषादिसमासानां लक्षणनिरूपणप्रसंङ्गे- 'पूर्वपदार्थप्रधानोऽव्यीभावः, उत्तरप्रधानतत्पुरुषः' इत्यादि लक्षणस्यातिव्याप्त्यव्याप्तादिदोषेण दूषितत्वात् तेषां लक्षणामनां प्रायिकत्वमूहितम्।

---

६ पा.अ.03-03-39

७ वै.भू. सा.

८ पा.अ02-01-04

९ महाभाष्यप्रदीप:02-01-01

१० वैयाकरणसि.अव्ययीभावः(तत्वबोधिनी) पृ.सं.203

११ महाभाष्यप्रदीप

समासवृत्ति: जहत्स्वार्थाऽजहत्स्वार्थेति भेदेन द्विविधा। अनयो: वृत्त्यो: क्रमश: एकार्थीभावव्यपेक्षारूपयो: पर्यवसानं लभ्यते।

जहत्स्वार्था– जहति स्वानि वृत्तिघटकपदानि स्वमर्थं स जहत्वस्व:, तादृशोऽर्थो यस्यां सा जहत्स्वार्था। स्वशब्दोऽत्रार्थात्मीयपर:। अर्थस्यात्मीयञ्च पदमेव। तथा च जहत्स्वार्थत्वमेव व्यपेक्षा। राजपुरुष: इत्यादौ समासशक्त्यैव राजविशिष्टपुरुषभानसंभवे न राजपुरुषपदयोरपि पुनस्तद्बोधकत्वं कल्प्यम्, वृषभयावकादिपदेषु वृषादिपदानामिव।

अजहत्स्वार्था– न जहति पदानि स्वार्थो यस्यां साऽजहत्स्वार्था। अस्मिन् पक्षे कल्पनाभावात् राजपुरुषादौ नातिरिक्ता शक्ति: कल्प्यते। अवश्यक्लृप्तप्रत्येकावयवशक्त्यैव बोधनिर्वाहे पुन: समुदाये शक्तिकल्पनस्य गौरवेण निरस्तत्वमित्यर्थ:। अयमेव व्यपेक्षापक्षो भाष्यकारेण समर्थसूत्रे संसाधित:।

जहत्स्वार्थाऽजहत्स्वार्थरुपे इमे द्वे अपि वृत्ति भेद:, संसर्ग:, उभयञ्चेति भेदेन त्रिविधे। यथोक्तम् –

**जहत्स्वार्थाऽजहत्स्वार्थे द्वे वृत्ती ते पुनस्त्रिधा ।**
**भेद: संसर्ग उभयं वेति वाच्यव्यवस्थिते:।।**[१२]

तत्र भेदोऽन्योन्यभाव: तथा राजपुरुष: इत्यादावराजकीयभिन्नपुरुष इति बोध:। यद्यत्र भेदो वाच्यो न स्यात्तदा राजपुरुष: सुन्दर: इत्यस्य यो राजस्वामिक: पुरुष स देवदत्तस्वामिकोऽपीति बोध: स्यात्।

वस्तुत: राजपुरुष: इत्यनेन प्रथमत: राजसम्बन्धवान् इत्येव शाब्दं भानं भवति। अराजकीयभिन्न इत्यादिभेदस्तूत्तरकालमुपतिष्ठते। अत: प्रथमोपस्थितरुपान्तरङ्गत्वात् संसर्ग एव वाच्य:, भेदस्तु तात्पर्यग्राहकसापेक्षत्वेन बहिरङ्गत्वान्न वाच्य:, किन्त्वार्थिक एवेति भाव:। संसर्गस्य भेदाविनाभावित्वात् संसर्गेण हेतुना भेदोऽनुमीयत इति भाव:। तथा च अनुगम्य एव भेदो न तु शाब्द:।

वस्तुत: सब्ददृष्ट्या समास: षड्प्रकारको भवतीति साधितं कौण्डभट्टेन –

**सुपां सुपा तिङां नाम्ना धातुनाऽथ तिङां तिङा ।**
**सुबन्तेनेति ज्ञेय: समास: षड्विधो बुधै: ।।**[१३]

एतद्विवरणं सोदाहरणं उपस्थाप्यते–

(1) **सुपां सुपा–** सुबन्तस्य सुबन्तेन स समास: – राजपुरुष: कृष्णाश्रित: नखभिन्न: इत्यादौ
(2) **सुपां तिङा–** सुबन्तस्य तिङन्तेन सह समास:। यथा– अनुव्यचलत्, पर्यभूषयत्। अत्र

१२ वै.भू.सा. समासशक्तिनिर्णय:-3
१३ वै.भू.सा. समासशक्तिनिर्णय:

परि इति सुबन्तस्य अभूषयत् इति तिङन्तेन सह समासः। उदात्तगतितमा च तिङ्न्तेनाव्ययं समस्यते इति वार्तिककार्थः अव्यस्योदात्तवता तिङन्तेन समासः।

(3) **सुपां नाम्ना–** सुबन्तस्य नाम्ना सह समासः। अत्र नामपदेन प्रातिपदिकस्य ग्रहणं न तु सुबन्तस्य अन्यथा **सह सुपा**[१४] इति सूत्रेणैव समाससिद्धौ नाम्नेति पुनुरुक्तिस्यात्। अतः प्रातिपदिकेनैव समासः। यथा कुम्भकारः। अत्र कुम्भम् इति सुबन्तस्य कार इति नाम्ना समासः। अत्र **गतिकारकोपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः** इति समासो भवति।

(4) **सुपां धातुना–** अत्र उत्तरपदं न सुबन्तं नापि तिङन्तम्। सुबन्तस्य धातुना सह समासः। यथा कटप्रूः। कटं प्रवते इति विग्रहः कटम् इति सुबन्तस्य गत्यर्थकप्रूधातुना सह समासः। अत्र कर्तरि क्विब्विधानेन प्रयोगः सिद्ध्यति।

(5) **तिङां तिङा–** अत्र तिङन्तस्य तिङन्तेन सह समासः आख्यातमाख्यातेन क्रियासातत्ये इति इति गणसूत्रम्। क्रियासात्सयं नाम क्रियायाः पौनः पुन्यम्। यथा पिबतखादता पचतभृज्जतेत्यादि। पिबतखादतेति सततं यस्यां क्रियायामधिधत्ते, सा पिबतखादतेत्यर्थः।

(6) **तिङां सुपा–** अत्र पूर्वपदं तिङन्तम् उत्तरपदं तु सुबन्तम् तिङन्तस्य सुबन्तेन सह समासः। तथा– जहिस्तम्बः, जहिजोडः इत्यादि। अत्र जहीत्येतत् तिङन्तं, स्तम्बेति सुबन्तेन सह समासः।

एवमेव षड्विधप्रकारको ससासः ग्रन्थकारेण निरुपितः।

****

१४ पा. सू. २.१.४

# समासशक्तिविमर्शः

**खुशबू कुमारी**
शोधछात्रा
व्याकरणशास्त्रम् जयपुरपरिसरः

**भूमिका –**

सर्वप्रथमं तु अस्माकं मनसि प्रश्नः आयाति किं नाम समासः इति। अतः समासस्य व्युत्पत्ति भवति– सम् उपसर्गपूर्वक असु–क्षेपणे, असु – उपवेशनेच इति धातोः घञ् प्रत्यय कृते (सम्+अस्+घञ्= समासः)समासः इति पदं भवति। समासः इत्युक्तेः 'समसनम् समासः', 'पदानां संक्षिप्तीकरणं समासः' अथवा 'अनेकेषां पदानां एकपदीकरणं समासः' इति। पद इत्युक्तेः सुप्तिङन्तं पदम् इति। समासे समासविग्रहः भवति। विग्रहः द्विप्रकारकः भवति यथा – लौकिकविग्रहः अलौकिकविग्रहश्च।

**लौकिकविग्रहः** – लोकमाश्रित्य क्रियमाणः विग्रहः लौकिकविग्रहः।

**अलौकिकविग्रहः** – शास्त्रमाश्रित्य क्रियमाणः विग्रहः अलौकिकविग्रहः।

विग्रहः अन्यारपि द्विप्रकारकः भवति यथा –

**स्वपदविग्रहः** – समासघटकपदैः क्रियमाणः विग्रहः स्वपदविग्रहः। यथा – राज्ञः पुरुषः= राजपुरुषः।

**अस्वपदविग्रहः** – समासघटकपदानिविहाय क्रियमाणः विग्रहः अस्वपदविग्रहः । यथा – उपकृष्णम् = कृष्णस्य समीपम् इति।

विग्रहः इत्युक्तेः वृत्या बोधकं व्याक्य विग्रहः इति तर्हि वृत्ति नाम किम् ? अतः वृत्तयः पञ्चतया–

**कृत्त**– तद्धित–एकशेष – समास – सनाद्यन्तरूपाः पञ्चवृत्तयाः।

१.**कृत्तवृत्तिः** – कुम्भं करोति इति कुम्भकारः।

२.**तध्दितवृत्तिः** – अश्वपतेः अपत्यम् आश्वपतम् इति।

३.**एकशेषवृत्तिः** – माता च पिता च – पितरौ इति

४.**समासवृत्तिः** – राज्ञः पुरुषः – राजपुरुषः इति।

५.**सनाद्यन्तधातुवृत्तिः** – गन्तुं इच्छति – जिगमषति इति।

समासे द्वे पदे स्तः यथा – पूर्वपदम् उत्तरपदश्च।

पूर्वपदम् – पूर्वत्र श्रूयमाणं पदं पूर्वपदम् तथाश्च उत्तरत्र श्रूयमाणं पदम् उत्तरपदम् यथा – राज्ञः पुरुषः इत्यत्र राज्ञः इति पूर्वपदं पुरुषः इति च उत्तरपदम्।

समर्थपदे एव समासः भवति। यथा सूत्रम् – समर्थः पदविधिः इति। पदसम्बन्धी यो विधिः स समर्थाश्रितो बोध्यः। इति सूत्रार्थः।

**विषयप्रवेशः –**

समासान् षट्स भागेषु विभजते, विद्वद्भिः –

**सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङा तिङा।**
**सुबन्तेनेति च ज्ञेयः समासः षड्विधौ बुधैः॥**[१]

यथा –

**१. सुपां सुपा –** यस्य समासस्य अलौकिक विग्रहे उभौ पदौ सुबन्तौ स्तः। सः सुबन्तस्य सुबन्तेन सह विधियमाने प्रथमो समासो भवति।

उदाहरणं यथा – 'राज्ञः पुरुषः' इत्यस्य राजन्+ङस्+सु इत्यत्र समासत्वात् राजपुरुषः इति रूपं सिद्धम्।

**२. सुप तिङा –** यस्मिन् समासे सुबन्ततिङन्तौ अलौकिकविग्रहे भवतः, स द्वितीयसमासः अस्ति। अत्र पूर्वपदं सुबन्तः उत्तरपदञ्च तिङन्तः भवति।

उदाहरणं यथा – 'परि+अभूषयत्' 'अनू+वि+अचलत् अत्र' गतिमतोदात्तवता तिङाऽपि समासः' इति वार्तिकेन समासो भवति। अत्र 'परि' इति सुबन्तः अभूषयत् इति तिङन्त 'परि व' सुबन्तः, अचलत् तिङन्तः वर्तते।

**३. सुप नाम्ना –** यस्मिन् समासे एकं प्रथमं पदं सुबन्तः उत्तरपञ्च विभक्तिरहितं नाम भवति, स तृतीयो समासोऽस्ति।

उदाहरणं यथा – 'कुम्भ+ङस्+कार' इत्यत्र 'उपपदमति' इति सूत्रेण समासो भवति। स च 'गतिकारकोपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः इति परिभाषया भवति सुबत्पत्तेः प्राक् अत्रोत्तरपदे सुबुत्पत्तेः प्रागित्यर्थात्। अन्यथा – 'चर्मक्रीती' इत्यादौ नलोपानापत्तेः। अर्थात् यद्यपि 'उपपदम्' इति सूत्रे भाष्येऽनयोर्योगयोर्निवृत्तं सुप्सुपेत्युक्तम्, तथाप्युपपदमिति महासंज्ञावलादेव पूर्वपदस्य सुबुत्पत्त्यनन्तरम् समास इत्याशयः। प्राक्सुबुपत्तेः इत्येकदेशप्रयोजनप्रदर्शनमिषेण परिभाषायाः प्रयोजनमपि दर्शितम्।' सुबुत्पत्तेः पश्चात् समासे हि स्वार्थद्रव्य-लिङ्ग-सङ्ख्या-कारकाणां क्रमिकत्वस्थान्तरङ्गहिरङ्ग-भावमूलकस्य कुत्सिते इति सूत्रभाष्य सम्मतत्वेनान्तङ्गत्वात् सुबुत्पत्तेः पूर्वं टाप्यनदन्तवात् 'क्रीतात् करणपूर्वात्' इति ङीषोऽनुपपत्तेरिति।

---

१. वै. भू. सा. स. श.

**४. सुपां धातुना –** यस्मिन् समासे पूर्वपदं सुबन्तः उत्तरपदञ्च धातु अस्ति, सः चतुर्थो समासोऽस्ति। उदाहरणं यथा – 'कट+ङस् पु' 'आयत+ङस्, स्तु' इत्यत्र क्विवब्वचिप्रच्छलयायतस्तुकटपुजुश्रीणां दीर्घश्च' इति वार्तिकेन समासः, धातोः उकारस्य दीर्घ कृते, उक्तं रूपं सिद्धम्।

**५. तिङां तिङां–** यस्मिन् समासे तिङन्तस्य सह समासो भवति, स पञ्चमः समासः 'तिङां तिङां' इति उच्यते।

उदाहरणं यथा – 'पिबत खादतः', 'पचत भृज्जत' इत्येषां तिडन्तानां मयूरव्यंसकादिगण पठित्वात् 'आख्यातमाख्यातेन क्रियासातत्ये' इति वार्तिकेन समासो भवति।

**६. तिङ सुबन्तेन–**यस्मिन् समासे तिङन्तस्य सुबन्तेन सह समासो भवेत्, स षष्ठमः तिङां सुबन्तेन समासोऽस्ति। उदाहरणं यथा – जहि स्तम्बः अत्र जहि स्तम्ब अम् इत्यनयोः मयूरव्यंसकादिगणे पठितेन जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारञ्चाभिदधाति वार्तिकेन समासो भवति।

अयं षड् विधोऽपि समासः सह सुपा इत्यत्र योगविभागे भाष्ये व्युत्पादितः शब्दकौस्तुभादौ स्पष्टः। स्वयं भाष्यादिसिद्धं तद्भेदं व्युत्पाद्य प्राचीन वैयाकरणोक्तविभागस्याव्याप्तिव्याप्त्यादिभिस्तल्लक्षणस्य प्रायिकत्वञ्च दर्शयति यत् –

**समासस्तु चतुर्द्धेति प्रायावादस्तथा परः।**
**योऽयं पूर्वपदार्थादिप्राधान्यविषयः सच॥**
**भौतपूर्व्यात् सोऽपि रेखागवयादिवदास्थितः।**[२]

व्याख्या – समासशक्तौ वर्णनीयायां घटकतया प्रविष्टस्य समाससाधारणस्य पूर्व निर्वचनीयत्वेन कथयति यत् –

अर्थबोधकलौकिकविभक्त्यवहितपूर्ववर्तित्वप्रकारकज्ञानविषयकपूर्वपूर्वपदघटित समुदायत्वं समासत्वम्। समासश्च चतुर्विधो भवति –

१. अव्ययीभावः
२. तत्पुरुषः
३. द्वन्द्वः
४. बहुव्रीहिश्चेति

**अव्ययीभावः –** पूर्वपदार्थप्रधानो अव्ययीभावसमासो भवति।

उदाहरणं यथा – कृष्णस्य समीपम् – उपकृष्णम्।

**तत्पुरुषः –** यस्मिन् समासे उत्तरपदार्थप्रधानो भवति, स तत्पुरुषसमासो भवति।

उदाहरणं यथा – राज्ञः पुरुषः – राजपुरुषः।

२. वै. भू. सा. स. श.

**द्वन्द्वः** – यस्मिन् समासे उभयपदार्थप्रधानो भवतः, स द्वन्द्वसमासो भवति।
उदाहरणं यथा – रामश्च कृष्णश्चेति रामकृष्णौ।
**बहुव्रीहिः** – यस्मिन् समासे अन्यपदार्थप्रधानो भवति, स बहुव्रीहि समासो भवति।
उदाहरणं यथा – कण्ठे इव कालः कण्ठेकालः।

इत्थं प्राचीनोक्तं समासभेदं नोचितं, यतोहि 'उन्मत्तगङ्गमित्यत्र उन्मत्तागङ्गा यस्मिन्देशे इत्यर्थेऽव्ययीभाव समासेऽन्यपदार्थप्राधान्यसत्त्वाद् बहुव्रीहिलक्षणातिव्याप्तिर्जायते।'सूपस्यलेशः सूपप्रति' इत्यत्रोत्तरपदार्थप्राधान्यत्वाद् तत्पुरुष लक्षणातिव्याप्तिः।'पिप्पल्या अर्द्धमर्द्धपिप्पली'त्यत्र पूर्वपदार्थ प्राधान्यसत्त्वादव्ययीभावातिव्याप्तिः। इत्थमेव 'द्वित्रज्ञः, शशकुशपलाशमि' त्यादावपि परस्परव्यभिचारात्। अतः अव्ययीभावाधिकार पठितत्वमव्ययीभावत्वम्, तत्पुरुषाधिकारपठित्वम्। बहुव्रीह्यधिकारपठित्वं बहुव्रीहित्वम्। द्वन्द्वाधिकापठितत्वं द्वन्द्वत्वमिति। एवञ्च 'सह सुपे' त्यत्र योगविभागेन सुपां तिङानाम्ना धातुनाऽथ तिङतिङा सुबन्तेनेति भाष्यव्युत्पादितषधिसमासविधानात्। समासथुर्धेति प्रायोवाद इत्यलम्।

**सन्दर्भग्रन्थसूची –**


१. आचार्य, लोकमणिदाहालः (सम्पादकः) (2011) : 'नागेशभट्टः-परमलघुमनृषा', चौखम्बा प्रकाशन, वाराणसी।
२. चौधरी, अर्कनाथः (सम्पादकः) (2011) : 'वरदराजाचार्यः-लघुसिद्धान्तकौमुदी', जगदीश संस्कृत पुस्तकालय, जयपुर।
३. चतुर्वेदः, गिरिधरशर्मि (सम्पादकः) (2005) : 'भट्टोजिदीक्षितः-वैयाकरणसिद्धान्तकौमुदी', मोतीलालबनारसीदास, दिल्ली।
४. द्विवेदी, चन्द्रिकाप्रसादः (सम्पादकः) (2010) : 'कौण्डभट्टः-वैयाकरणभूषणसारः', चौखम्बा प्रकाशन, वाराणसी।
५. शास्त्री, सत्यनारायण (सम्पादकः) (2008) : 'पाणिनिः-अष्टाध्यायी', चौखम्बा कृष्णदास अकादमी, वाराणसी।